तयोः पदानां निधनत्वात् **प्रागृच उपायवान् स्तोभः पदनिधनेषु** (प्र. सू. १.२३) इति वक्ष्यमाणन्यायेन तृतीयपादार्थम् आह्रियमाणः स्तोभ एव प्रतिहार इति । द्विपदाकारपक्षे तु वक्ष्यति—**द्विपदाकारे दशमैः स्तोभैः प्रतिहार** (प्र.सू. ७.२६.) इति । यद्यपि धर्मविधर्मणोः पक्षद्वयं पुरस्तात् स्वस्थान
5 एव वक्ष्यते तथापि विभाग्येषु पक्षद्वयमनेन न्यायेन यथोक्तं स्यादित्येवमर्थमनयो-श्चतुष्पदाकारपक्षस्यात्रोपन्यास इति ॥ १४ ॥

ननु यदि विभाग्येषु उपोत्तमं पदं प्रतिहारस्तर्हि त्रिपदानां गायत्र्यादीना-मुद्गीथस्य लोपप्रसङ्गः तत्राह—

## त्रिपदानां तु तृतीयं स्तोभश्चेत् ॥ १५ ॥

10 **त्रिपदानां तु** विभाग्ये **तृतीयं** पदं प्रतिहारः। यद्येवमुपद्रवस्य लोपप्रसङ्ग इत्याशङ्क्योक्तं **स्तोभश्चे**दिति ॥

यदि तृतीयपादादूर्ध्वम् उपद्रवार्थं स्तोभो विद्यते तदैतदुक्तमित्यर्थः। उदाहरणं **स्वाशिरामर्कोऽग्नेरर्क** इत्यादि । सूत्रकारस्त्वाह-**गयत्रीसामसु**
14 **विभाग्येषूत्तमम् । व्यावर्गं शिष्ट्वा प्रतिहरेदिति धानञ्जय्यः** इति ॥ १५ ॥

---

1. OS[1]. पादानां for पदानां.

2. H. तृतीये for तृतीय ; HOS[1]. पादार्थः for पादार्थम्.

3. HO. द्विपदाकारे च for द्विपदाकारपक्षे तु.

4. HO. after °द्वयं adds : अपि ; AB[1]B[2] परस्तात् for पुरस्तात् ; HC. स्वस्तोभ इष्यते for स्वस्थान एव वक्ष्यते.

5. B[1]B[2]MAS[1]. विभागेषु वक्तव्यम् न (M. om. न) त्वयमेव नोक्तं for पक्ष° ... °यथोक्तं ; MS[1] अर्थः । for अर्थम्.

7. M. om. यदि ; S[1]. om. उप° ; O. प्रतिहारं तदा for प्रतिहारस्तर्हि ; H. om. तर्हि.

10. B[3]. before त्रिपदानां adds :— स्तोभे सति ; H. विभागेषु for विभाग्ये ; B[1]M पादं for पदं ; H. यद्येहं (!) तदास्य for यद्येवमुपद्रवस्य.

12. A. om. यदि .... धानंजय्य इति ; HO. °पादे for °पदादूर्ध्वं ; HO. भिद्यते for विद्यते.

14. H. व्यावर्गशिष्टः for व्यावर्गं शिष्ट्वा.

अथ यदि तृतीयपादादूर्ध्वं स्तोभो न विद्यते ततः किं कर्तव्यमित्यत आह—

**ऋक्सामे द्वैधं बहिर्निधने ॥ १६ ॥**

तृतीयमित्यनुवर्तते । **ऋक्सामे** ऋच उपरिष्टात् स्तोभरहिते त्रिपदे विभाग्ये तृतीयं पदं द्विधा कर्तव्यम् । तत्र प्रथमो भागः प्रतिहारः । द्वितीय उपद्रवः इति । नन्वेवं निधनभक्तेर्लोपः स्यादित्याशङ्क्योक्तं **बहिर्निधन** इति यद्यृक्समं साम ऋगक्षरात् बहिर्भूतेन निधनेन युक्तं तदैतदुक्तमित्यर्थः ॥ १६ ॥ 5

तत्रोदाहरणं दर्शयति—

**दीर्घं सुतमिति यथा ॥ १७ ॥**

एतच्च **कदा वसो स्तोत्रम्** (ग्रा. ६.१२.२२८.१-२) इत्यनयोः प्रथमं द्रष्टव्यम् ॥ १७ ॥ 10

अथ बहिर्निधनाभावे किं कर्तव्यमित्यत आह—

**त्रैधमन्तर्निधने ॥ १८ ॥**

ऋगन्तर्भूतमार्चिकमेवाक्षरं निधनं यस्य तस्मिन् ऋक्सामे तृतीयं पदं त्रिधा कर्तव्यम् ॥ १८ ॥ 15

तत्रोदाहरणमाह— 16

**यथा गोराङ्गिरसस्य ॥ १९ ॥**

---

1. AB[1]. om. अथ ; M. om. यदि ; HO. °पादे for °पादादूर्ध्वं ; MAB[1]B[2]S[2]. तत्र for ततः ; O. om. इति.

4. B[1]MH. om. अनु.

5. M. पादं for पदं ; H. विभाग्यं for विभाग्ये ; B[1]. तथा for तत्र.

7. HO. यद्वार्कसमं for यद्यृक्समं ; M. °सामं for °समं ; HO. युक्तमिति तदुक्तम् for युक्तं तदैतदुक्तम्.

10. HOS[1]. प्रथमे for प्रथमं.

12. AS[1]. कथं for किं ; AS[1]HO. om. अतः.

14. AMB[1]B[2]S[1]. यस्मिन् for यस्य ; HO. पादं for पदं.

**कस्य नूनम्** (ग्रा.१.३.३४.१-२) इत्यनयोराद्यस्य साम्न इत्यर्थः। तत्र चत्वार्यक्षराणि प्रतिहारः ; द्वे उपद्रवः ; द्वे निधनम् इत्येवं तृतीयस्य पादस्य त्रिधा विभागः। अत्र च ऋक्सामस्य विभाग्यस्योदाहरणमूहगीतिषु न दृश्यत इत्यस्यापवाद एकाहादिषु प्रयोज्यान्यूहानि सामानि अभिप्रेत्य उदूहगीति[:] 
5 तेष्वपि दर्शितम् (ता ?) इति ॥ १९ ॥

अथोष्णिहां त्रिपदानां विशेषं दर्शयति—

**उष्णिहां तु विभाग्ये तृतीयेऽष्टाक्षरं चतुरक्षरमुद्गातुः ॥ २० ॥**

उष्णिक्संबन्धिनि **विभाग्ये** साम्नि **तृतीये** पादे **अष्टाक्षरं** प्रतिहर्तुः 
10 **चतुरक्षरमुद्गातु**रिति।

तत्रोदाहरणमाह—

**यथा दैवोदाससौमित्रयोः ॥ २१ ॥**

अत्र **दैवोदासं** यस्य त्यच्छम्बरं मदे (ग्रा. १०.५.३९२.१-४) इत्येतेषामाद्यं गृह्यते। तत्र **अयं स सोम इन्द्र ते** इत्यष्टाक्षरः प्रतिहारः। 
15 **सुतः पिब** चतुरक्षरम् (रः ?) उपद्रवः ॥

**सौमित्रं** तु स्तोभविभाग्यम्। तत्र **ब्रह्मकृते विपश्चिते** (सा. ३८८) इत्यष्टाक्षरस्य पुरस्तात् स्तोभः प्रतिहारः। ततः परस्य चतुरक्षरस्य पुरस्तात् 
18 स्तोभ उपद्रव इति ॥ २१ ॥

---

1. B[1] इत्थं for इत्यर्थः। तत्र.

8. A. क्रिया°, M. तृतीय° for त्रिधा; B[1]. °समस्य, M. °साम for °सामस्य.

4. AHOM.om :— अस्य; H. आपवाद AB[2] आपवादम् for अपवादः A. ऊह्यानि for ऊहानि; AB[2]. अनभिप्रेत्य for अभिप्रेत्य. M. B[1]B[2]AS[1]. अनूहगीतिषु for उदूहगीति[:] तेषु.

14. HB[1]O. एषाम् for एतेषाम्.

**विच्छन्दःस्वक्षरवृद्धिर्लोपश्च । तत्र गीतेन प्रतिहारं विद्यात् ॥ २२ ॥**

**विच्छन्दस्सु** स्वयोनिविसदृशच्छन्दस्सु सामसु विषमभक्तिषु विभाग्येषु च अक्षराणां **वृद्धिर्लोपश्च** प्रतिहारे भवति। तत्र योनौ प्रतिहारत्वेनोक्तानाम् अक्षराणां गीतिर्विच्छन्दसि यावत्स्वक्षरेषु परिसमाप्यते तावन्त्येवाक्षराणि प्रतिहारः । न तु योन्युक्तमक्षरपरिमाणं तस्मिन्नादरणीयमित्यर्थः । तत्र विषम-भक्तिष्वक्षरवृद्धिर्गवेषणीया । विभाग्येषु यथा **पञ्चनिधनवामदेव्ये** योनावष्टाक्षरा विधा**स्त्रिकद्रुकेषु महिष** (र.गा.सं.४०.) इत्यतिच्छन्दस्सु षोडशाक्षरा भवन्ति ॥

अक्षरलोपः खल्वपि **इलान्दस्यो**त्तमेऽनुगाने षडिति **षडक्षरः प्रतिहार** इति वक्ष्यति। तस्य गीतिः **पुत्रो मातरा** (र.गा.सं.४२.) इत्यत्र त्र्यक्षरा भवति। तद्यथा **रोदसौ हो** इति । तथा तस्यैव तृतीयानुगाने योनौ त्रिष्टुभ्येकादशाक्षरा विधा **बृहद् भानो शवसा** इत्यत्र पञ्चाक्षरा भवति। एवमन्यत्रापि द्रष्टव्यम् । अत्र च **विच्छन्दस्सु गीतेन प्रतिहारं विद्यात्** इत्येतावदेव विवक्षितम् । **अक्षरवृद्धिर्लोपश्चे**त्येतत्तु प्रायिकम् । तथा च **अभि प्र वः**

---

3. MB[1]B[2]A. योनि° for स्वयोनि° ; OMH. om. सामसु ; HO. °भक्ति-विभाग्येषु for °भक्तिषु विभाग्येषु.

4. MH. हारो for हारे.

5. H. स्वच्छन्दसि for गीतिर्विच्छन्दसि ; O. om. गीतिः ; MB[1]B[2]AS[1]. समाप्यते for परिसमाप्यते.

6. S[1]. after °माणं adds :— वरं.

7. H. अक्षरं वृद्धिः करणीया for अक्षरवृद्धिर्गवेषणीया ; HO. निधनस्य वामदेव्यस्य for °निधनवामदेव्ये ; M. °निधनं for निधन.

9. M. गाने for अनुगाने ; S[1]. om. षडिति.

10. B[1] गतिः for गीतिः ; S[1]MB[1]O. भवन्ति for भवति.

11. AB[2]M. रोदासो for रोदसौ ; HO. अथ for तथा ; M. om. तथा ; MB[2]AH. एकादशाक्षर for एकादशाक्षरा.

12. B[1]MS[1] भवन्ति for भवति ; O. पञ्चाकृता for पञ्चाक्षरा.

13. H. गीते च for गीतेन.

14. O. om. च ; MAB[2]. om. अभि प्र वः ; B[1] त्रि प्रव for अभिप्रवः.

(र. गा. प्रा. ३) इति बृहत्यां वृष्णः **प्रत्नं पीयूषम्** (ऊ. गा. ए. १४७) इति
द्विपदायां च **आमहीयवस्य** अक्षरवृद्धिलोपाभावेऽपि गीतेन प्रतिहारविज्ञानं
भवति। सूत्रकारश्च प्रातिहारिकमेव गीतं **प्रतिहारो वैच्छन्दसेष्वपवादावित्ये-**
तावद् एव वदन्नक्षरवृद्धिर्लोपश्चेत्येतदतन्त्रं मन्यते। अत्र विभाग्यानि त्रिविधानि।
5 पदविभाग्यानि सस्तोभपदविभाग्यानि स्तोभविभाग्यानि चेति। तत्र स्तोभरहितानि
**प्रवद्भार्गव**ादीनि पदविभाग्यानि। तेषु पदानामेव केवलानां विभागात्।
स्तोभयुक्तानि **महावैश्वामित्रा**दीनि सस्तोभपदविभाग्यानि। तेषु सस्तोभानां
पदानां विभागात्। तथा च सूत्रम्—**आद्यन्तस्तुब्धेषु पदाय पदाय
स्तोभेद्यो यः पदं ब्रूयात्। तथानुपदं स्तुब्धेषु** ( )
10 इति॥ २२॥

अथ स्तोभविभाग्यानि दर्शयितुमाह—

**प्रागृच उपायवान् स्तोभः।**
**पदनिधनेषु यथा गोष्ठप्रतोदयोः॥ २३॥**

14 **इति श्रीकात्यायनकृते प्रतिहारसूत्रे प्रथमः खण्डः॥ १॥**

---

2. A. द्विपदाया: for द्विपदायां; O. om. च.

3. M. अप्यपवादौ for अपवादादौ.

4. B[1]. °एवदन्ताक्षर°, HO. एवं नामाक्षर°, M. °एव पादन्नक्षर° for एव वदन्नक्षर; HO. एतदन्तं, B[2]A. एतदन्तं न, B[1] एतन्न for एतदतन्त्रं; M. अथ, HO. तत्र for अत्र.

5. A. स्तोभ° for सस्तोभ°; AB[2]B[1]M. om. इति; H. इति च for चेति.

6. H. विभाग्यात् for विभागात्.

7. HO. °विभाग्यानि for °युक्तानि.

8. B[2]. °स्तुब्धेषूपादाय for स्तुब्धेषु पदाय.

9. M. स्तोभेदिति दद्याद्यः for स्तोभेद्यो यः; HO. स्तोदं for पदं; O. अनुपदाः for अनुपदं.

उपायशब्देन **वाक् चेत् स्तोभान्तोऽनन्तरः पुरस्ताद्वृद्ध** (    ) इत्यादिसूत्रोक्तनिधनोपलक्षणादिभूतो वागादिरुच्यते। **आद्यन्तस्तुब्धेषु पदाय पदाय स्तोभेत्** (    ) इत्यादि सूत्रोक्तानां प्रतिपादमाह्रियमाणानां स्तोभानां वागाद्युपायान्तत्वात् तदनन्तराणि निगदवर्तीनि पदानि निधनानि येषां तेषूपोत्तमा-द्विभागात् पूर्व **उपायवान् स्तोभः** प्रतिहर्त्रा वाच्यः। **उपायवानिति** विशेषणं पदनिधनत्वलक्षणार्थमुक्तम्। उदाहरणम्—**गोष्ठप्रतोदसौमित्रादिषु** तानि स्तोभविभाग्यानि। तेषु स्तोभानामेव केवलानां विभागात्। एतच्च सूत्रमुपोत्तमं **प्रतिहर्तु**रित्युक्तस्यैव न्यायस्य विस्पष्टीकरणार्थमुक्तम्। सूत्रकार-स्त्वाह—**निधनानि पदान्युपायसदृशाः स्तोभान्ता येषां तानि (स्तोभ-विभाग्यानि)** इति। तत्र तृतीयायैव पदाय प्रतिहर्ता स्तोभेदिति ॥ २३ ॥ 5 10

इति श्रीवामनार्यसुतवरदराजविरचितायां दशतयीवृत्तौ
प्रतिहारसूत्रव्याख्यायां प्रथमः खण्डः ॥ १ ॥ 12

---

3. MB[2]AS[1]. सूत्रोक्त for सूत्रोक्तानां.
4. O. om. तद्.
5. HO. पूर्वं for पूर्वः; AMB[2]. प्रतिहर्तुः for प्रतिहर्त्रा.
6. B[1]. °निधन° for °निधनत्व°; HO. शिक्षणार्थम् for लक्षणार्थम्.
7. HO. विभाग्यात् for विभागात्.
8. O. तस्य for उक्तस्य; O. स्पष्टी° for विस्पष्टी°.
10. HBO. om. इति; M. om. तत्र; O. trans. प्रतिहर्ता after स्तोभेत्.

## द्वितीयः खण्डः

एवं प्रतिहारस्य न्यायसमुद्देशमुक्त्वा अथ समाननामधेयानां विनियोग-
नियमार्थं सूत्रचतुष्टयम्। तत्र तावत् सन्ति कानिचित् सामानि समाननामधेयानि
द्वन्द्वादीनि विच्छन्दांसि। तद्यथा - **प्रेष्ठं वः** (सा. १२४४) इति
5 गायत्र्यां **प्र तु द्रव** (सा. ६७७) इति त्रिष्टुभि चोत्पन्ने द्वे **औशने**। एवं
**यस्ते मद** (सा. ८१५) इति गायत्र्याम्, **प्रक्षस्य वृष्णः** (सा. ६०९) इति
जगत्यां चोत्पन्ने द्वे **भासे**। तथा द्वे **वाजिजिती मृज्यमान** (सा. १०६९)
इति बृहत्याम् **अभिप्रियाणि** (सा. ७००) इति जगत्यां चोत्पन्ने। एवमन्या-
न्यपि **गौतमा**दिद्वन्द्वानि विच्छन्दांसि समाननामधेयानि द्रष्टव्यानि। तत्राभि-
10 प्लवस्य प्रथमेऽहनि माध्यंदिने पवमाने कल्पः **औशनमन्त्य**मिति। प्रथमे च
11 स्वरसाम्नि **औशनमौपगवं वसिष्ठस्यप्रियं तैरश्चं** वेत्युक्थानीति। तयोर्द्वयो-

---

2. AMB¹B². उक्तम् for उक्त्वा, S¹. °समुद्देश उक्तः for °समुद्देश-मुक्त्वा.

3. M. विनियोगार्थं, HO. विनियोगनियमेन न्याय्यप्रदर्शनार्थं for विनियोग-नियमार्थं.

4. S¹. °धेयादीनि for °धेयानि.

5. MB²A. द्वन्द्वे for द्वे ; B¹. om. द्वे.

6. M. after गायत्र्यां adds :—विभ्राट् बृहदिति जगत्यां चोत्पन्ने ; B¹HO. विभ्राट् बृहत् (     ) for प्रक्षस्य वृष्णः

7. B¹B²MA. द्वन्द्वे for द्वे ; S¹ वाज° for वाजि°.

8. H. om. इति ; H. om. अभिप्रियाणीति जगत्यां.

9. A. गौतमानि द्वन्द्वानि, M. गौतमादीनि द्वन्द्वानि for गौतमादि द्वन्द्वानि ; B²AS¹MHO. om. समाननामधेयानि.

11. B². उक्तानि, AB¹ उत्थानि for उक्थानि ; M. द्वन्द्वयोः for द्वयोः.

रपि स्थानयोरौशनद्वयस्यानियमप्रसङ्गः । एवं भासादिद्वन्द्वानामपि यथासंभव-
मनियमप्रसङ्ग उदाहर्तव्यः । ततस्तेषां विनियोगनियमार्थम् इदं सूत्रम् ॥

**द्वन्द्वानामेकार्षेयाणां विच्छन्दसामनुच्छन्दसं विनियोगः ॥ १ ॥**

**द्वन्द्वाना**मिति जातौ बहुवचनम् । **एक**शब्दः समानपर्यायः । **आर्षेय**-
शब्देनात्र समाननामधेयत्वमुच्यते । प्रायेण ऋषिसंबन्धकृतत्वात् । तस्मात् 5
**विच्छन्दसा**मिति बहुव्रीहिः । **अनुच्छन्दस**मिति पदार्थानतिवृत्त्युक्ताव्ययी-
भावः । तदयमर्थः । औशनादिसमाननामधेयकस्य सामद्वयस्य विहितयो-
श्छन्दसोरुत्पन्नस्य तत्तच्छन्दोऽनतिक्रमेणैव विनियोगः इति ॥

अत्र सूत्रम्—**छन्दोदैवतसामान्तयोगा न्याय्यान् ब्रुवते । यथा
षोडशिमतोऽतिरात्रस्य ज्योतिष्टोमस्य** ( ) इति । तस्यायमर्थः । 10
**यथा** येन प्रकारेण **षोडशिमतोऽतिरात्रस्य** अतिरात्रसंस्थस्य **ज्योतिष्टो-
मस्य** छन्दोयोगा दैवतयोगाः सामान्तयोगाश्च भवन्ति तान् तेनैव प्रकारेण
क्रत्वन्तरेष्वपि **न्याय्यान् ब्रुवते** । ज्योतिष्टोमप्रकृतिकत्वादितरेषाम् । तत्र 13

---

1. M. °द्वन्द्वस्य for °द्वयस्य.

2. B[2] नियम° for अनियम°.

4. HO. सदृशपर्यायः for समानपर्यायः.

5. AB[1]B[2]M. नामधेयम् for नामधेयत्वम्; S[1]. सामनामधेयम् for समाननामधेयत्वम्; HO. om. ऋषि; OS[1]. तस्य for तस्मात्.

6. H. अनुष्टुप्छन्दसम् for अनुच्छन्दसम्; MAB[2]. पदार्थानतिवृत्तिः, B[1]. पदार्थानतिवृत्तिमे, HO. पदार्थानति उक्तौ, S[1]. पदार्थानतिवृत्तौ for पदार्थानतिवृत्त्युक्तौ.

7. AB[2]S[1]. हीनयोः, B[1]. विभिन्नयोः for विहितयोः.

9. AB[2]. om. °दैवत ... छन्दोयोगाः (L.12).

10. S[1]BHO. om. अयम्.

11. M. HO. om. अतिरात्रस्य.

12. S[1] प्रकरणेन for प्रकारेण.

छन्दोयोगो यथा प्रातस्सवने बहिष्पवमान आज्यानि चत्वारीति। पञ्चानां स्तोत्राणां गायत्री छन्दः। अथ माध्यंदिने पवमाने गायत्री बृहती त्रिष्टुबित्येवं त्रीणि च्छन्दांसि। चतुर्णां पृष्ठानाम् आद्यस्य प्रथमा बृहती। ककुभावुत्तरे। द्वितीयस्य गायत्री। इतरयोः बृहती इति माध्यंदिनं सवनम्। तृतीये सवने
5 तु आर्भवे पवमाने गायत्री ककुबुष्णिगनुष्टुब् जगतीति पञ्च च्छन्दांसि। अग्निष्टोमसाम्नो बृहती प्रथमा। ककुभावुत्तरे। इत्यग्निष्टोमसंस्था। अथोक्थ्येषु प्रथमस्य गायत्री। द्वितीयस्य ककुप्। तृतीयस्य तु यद्यपि प्रकृतौ ककुप् प्रथमा अथोष्णिगथ पुरउष्णिगनुष्टुबिति विच्छन्दसो विहितास्तथापि विकृतिष्वनुष्टुभ एव न्याय्याः। तेनानुष्टुभो नयन्त्यच्छावाकसाम्नीत्यनुष्टुभाममुख्यत्वप्रतीतेः
10 तदिदमुक्तं सूत्रकारेण—**उक्थ्योत्तमेऽनुष्टुभो न्याय्याः। विच्छन्दसस्तु वचनात्** इति॥ एवमुक्थ्यसंस्था॥

अथ षोडशिसाम्नो रात्रिस्तोत्राणां च द्वादशानामनुष्टुप्। संधिसाम्नां
13 त्रयाणां बृहत्यः प्रथमाः। ककुभ उत्तरा इति। दैवतयोगो यथा सर्वेषां

---

1. S[1]. °योगे for योगः; B[1]B[2]AMHO. बहिष्पवमानमाज्यानि for बहिष्पवमान आज्यानि; B[2]A. after आज्यानि add :— च.

2. OH. om. एवं.

3. B[1]. प्रथमस्य for आद्यस्य; HB[2]O. ककुबुत्तरे for ककुभावुत्तरे.

4. MB[1]O. तृतीय for तृतीये.

6. HO. कुकुबुत्तरे for ककुभावुत्तरे.

7. B[2]AHO. om. प्रकृतौ; B[1]. प्रकृति for प्रकृतौ; HO. प्रथमा ककुबथोष्णिगथोनुष्टुबिति for ककुप् प्रथमा... °ष्टुबिति.

8. MB[1]. छन्दसः for विच्छन्दसः.

9. H. न्याय्यः for न्याय्याः; B[2]B[1]. नयन्त्यच्छावाका साम्नः, AM. नयन्त्यच्छावाकसाम्नः for नयन्त्यच्छावाकसाम्नि; AB[2]. अनुष्टुप् मुखत्वाप्रतीतेः, M. अनुष्टुप् मुख्यत्वप्रतीतेः, HO. अनुष्टुभो मुख्यत्वप्रतीतेः for अनुष्टुभाममुख्यत्वप्रतीतेः.

13. HO. ककुबत्तराः for ककुभ उत्तराः; HO. °योगास्तथा for °योगो यथा; M. after सर्वेषां adds: अपि.

पवमानानां सोमो देवता । आज्यानाम् अग्निर्मित्रावरुणाविन्द्र इन्द्राग्नी इति क्रमेण देवताः पृष्ठानां चतुर्णामिन्द्रः । अग्निष्टोमसाम्नां प्रथमोकृथ्यस्य चाग्निः । परयोरुकृथ्ययोः षोडशिसाम्नो रात्रिसाम्नां चेन्द्रः । संधिसाम्नामग्निरुषा अश्विनाविति क्रमेण देवता इति । अत्र निदानकारेण साम्नां छन्दो देवता अस्ति नास्तीति विचार्योक्तम् । **अस्तीति गौतमः । यच्छन्दस्यायामृचि गीयते** 5 **तदस्य छन्दः । यद्देवत्यायां सास्य देवता ।** इति । सामान्तयोगस्तु गायत्रेण स्तुत्वा निधनवता स्तुवन्ति । ऐडेन बृहतीमारभन्ते । गायत्रं पुरस्तात् भवति । स्वारमन्तत इत्येवमादिः । अस्य च सामान्यातिदेशस्य कल्पब्राह्मणाद्याम्नायानुसारेण अपवादो द्रष्टव्यः । तदुक्तम्—**अन्वध्यायमपवादनिशामनमिति । तद्यथा व्यूढदशरात्रे छन्दांसि वान्योन्यस्य** 10 **लोकमभ्यध्यायन् । गायत्री त्रिष्टुभः । त्रिष्टुप् जगत्याः । जगती गायत्र्याः । तानि व्यूहन्निति छन्दोयोगस्य तथा विश्वजिति बहिष्पवमाने उप त्वा जामयो गिर (सा. १५७०) इत्युपवती प्रतिपत् भवतीत्यादिना** 13

---

1. B[1]. इन्द्राग्निर्देवताः क्रमेण for इन्द्राग्नी इति क्रमेण देवताः.

2. AB[2]. om. पृष्ठानां...क्रमेण देवताः (L.4); HO. °साम्नः for साम्नां; O. प्रथमोकृथत्वस्य for प्रथमोकृथ्यस्य.

3. MB[1]. om. उकृथ्ययोः.

5. O. om. इति विचार्य...देवता; AB[2]. यच्छन्दसि यस्याम्, M. यच्छन्दस्याम् for यच्छन्दस्यायाम्; HB[1]. गौतमे for गौतमः.

6. B[2]A. तदस्याः for तदस्य; B[1]MB[2]. दैवत्यायां for देवत्यायां.

7. H. after स्तुत्वा adds :—न.

8. HO. आदयः for आदिः; O. °देशिकस्य for °देशस्य.

9. MAB[2]B[1]. om. तदुक्तम्.

10. AB[1]. निशमनम् for निशामनम्.

11. H. लोपम् for लोकम्; M. अभिध्यायन् for अभ्यध्यायन्.

12. HO. om. तानि व्यूहन्; S[1]. after इति adds :—उक्तम्; B[1]S[1]. om. छन्दोयोगस्य.

13. M. उपवर्ती for उपवती; B[1]. प्रतियत् for प्रतिपत्; AMB[2]. आदीनां for आदिना.

**नानादेवत्यानामृचां विधानं** दैवतयोगस्य। तथा छन्दोमेषु निधनान्ताः पवमाना भवन्तीति सामान्तयोगस्य। एवमन्येऽप्यपवादा द्रष्टव्याः। एवं-स्थिते माध्यंदिनान्तस्य त्रिष्टुप्स्थानत्वात् त्रैष्टुभस्यैवौशनस्य तत्र विनियोगः। प्रथमोक्थ्यस्य तु गायत्रीस्थानत्वात् तत्र गायत्रीसाम्न एव औशनस्येति नियमोऽ-
5 नेन क्रियते। एवं भासवाजिजिदादिद्वन्द्वानामप्यनुच्छन्दसं विनियोगो द्रष्टव्य इति ॥ १ ॥

ननु च यत्र भासं स्वयोनिविसदृश एव छन्दसि विशेषवचनेन विधीयते। तथा वाजिजित्। तत्र तयोर्भासवाजिजितोश्चानियम एव प्राप्नोति। न हि तत्रानुच्छन्दसं विनियोग इत्ययं नियमः संभवति। इत्यत आह—

10 **आपद्येते तु जागते भासवाजिजिती विच्छन्दसः ॥ २ ॥**

**तुः** पूर्वोक्तनियमप्रसङ्गव्यावृत्त्यर्थः। **विच्छन्दसः** इति बहुव्रीहे-र्द्वितीयाबहुवचनम्। **जागते एव भासवाजिजिती विच्छन्दसः** ऋच
13 **आपद्येते।** न तु गायत्रीसाम भासं बार्हतं वाजिजिदित्यर्थः ॥ २ ॥

---

1. B²AM. देवता for दैवत; M. तदा for तथा.

2. B¹M. सामान्ते for सामान्तयोगस्य.

3. H. स्थित for स्थिते; MB²A. °दिनान्त्यस्य for दिनान्तस्य; AB¹B²M. °स्थानस्य, S¹. °स्थानस्य वर्तमानत्वात् for °स्थानत्वात्.

4. B²A. प्रथमोऽस्य, B¹. प्रथमो यस्य, S¹. प्रथमे औशनस्य for प्रथमोक्थ्यस्य.

5. OH. वाजजित् for वाजिजिदादि; B²M. अनुच्छन्दसां, H. अनुष्टुप्-छन्दसं for अनुच्छन्दसं.

8. AM. after तत्र add: न; OH. द्वयोः for तयोः; HOB¹S¹. °भासयोः for °भास; AMB¹B². न तयोर्भासवाजजितोरयं नियम आप्नोति for तयोर्भासवाजिजितोश्चानियम एव प्राप्नोति; OHS¹. वाजजित् for वाजिजित् through out; A. तर्हि for न हि.

9. B¹. इत्यनियमः for इत्ययं नियमः; S¹. om इति; HO. अत्र for अतः.

11. HB¹O. अतः, MS¹. तुशब्दः for तुः; S¹. बहुव्रीहौ, HB². बहुव्रीहिः for बहुव्रीहेः.

12. MAB¹B². om. एव.

तत्रोदाहरणं दर्शयति—

**भासमनुष्टुभो बृहत्पृष्ठे विषुवति द्विपदे**
**वाजिजिच्छन्दोमवति दशरात्रे ॥ ३ ॥**

बृहत्पृष्ठे विषुवति सूत्रम्—**श्यावाश्वविकर्णगौरीवितान्धीगवौदल-भासान्यनुष्टुभि** इति। तत्र जागतमेव भासमनुष्टुभ्यापद्यते। न तु गायत्रीसाम। तथा छन्दोमवद्दशरात्रे कल्पः **परिप्रधन्व इति वाजिजित् सूर्यवतीषु कावमन्त्यमिति**। तत्र च जागतमेव वाजिजिद्द्विपदे आपद्यते। न तु बार्हतम्। कुत एवं व्यवस्था। उच्यते। महादिवाकीर्त्यपृष्ठे विषुवति भासं दशस्तोभमग्निष्टोमसामेत्यग्निष्टोमसामत्वेन विहितम्। **भासं बृहत्-पृष्ठे विषुवति** यज्ञायज्ञीयस्य अग्निष्टोमत्वेन विधानात् स्वस्थानात् प्रच्युत-मग्निष्टुभ्यनुगृह्यते ॥

अथ यत्राग्निष्टोमसाम भवति तद्यज्ञायज्ञीयमनुष्टुभि भवति। **एष नेदिष्ठ-चतुष्पद आवाप** इति निदानकारोक्तन्याय्यात् जागतमेव तत्र युक्तम्। **छन्दोमवति दशरात्रे** च कावेन स्वस्थानात् प्रच्युतस्य दाशमिकस्य वाजिजितो

---

2. H. अनुष्टुभा for अनुष्टुभो; HB[1]O. द्विपदा for द्विपदे.

4. H. विषुवन्ति for विषुवति.

5. MB[3]A. अनुष्टुभः, B[1]. आनुष्टुभः for अनुष्टुभि.

8. A. अतः for कुतः; AMB[2]. °कीर्त्यं for °कीर्त्य.

9. HMO. om. अग्निष्टोमसामेति.

12. OS. after यत्र adds: अन्यत्; M. after भवति adds: इति; MB[2]AS[1] नेदिष्ठी for नेदिष्ठ.

13. M. निदानाकारेणोक्तत्वात् for निदानकारोक्त; AB[1]B[2]. न्यायात् for न्याय्यात्; B[1]MHO. after न्याय्यात् add: इति.

14. B[2]B[1]AS[1]. छन्दोमवत् for छन्दोमवति; B[1]B[2]AS[1]. om. प्रच्युतस्य.

द्विपदास्वनुग्रहः क्रियते। **वाजिजित् द्विपदास्वनुगृह्णाति। संयुक्त-मेतेनाभावेन** भवतीति निदानवचनादिति। तत्रापि जागतमेव वाजिजिद्युक्त-मिति॥ ३॥

एवमेकार्षेयाणां केषांचित् विनियोगनियमं प्रदर्श्य अथान्येषां प्रदर्शयितु-
5 माह—

**छन्दसा जाम्यसंचारस्थानैश्च समीक्षेत॥ ४॥**

विनियोग इति प्रकृतमत्र द्वितीयान्तत्वेन विपरिणम्य अनुषञ्जनीयम्। अनादेशे यथायोगम् एकार्षेयाणां छन्दःप्रभृतिभिः विनियोगं **समीक्षेत**। सम्यक् निश्चयेन जानीयादित्यर्थः। तत्र छन्दसां विनियोगनियमः पूर्वमेवानुच्छन्दसं
10 विनियोग इति दर्शितः। द्वन्द्वानां विच्छन्दसाम् इत्युदाहृतं च। इह तु **छन्दसेति** पुनर्वचनं विनियोगनियमहेतूनामेकत्र संकलय्य प्रदर्शनार्थमनुवादमात्रम्। अत एव जाम्यादीनां वैलक्षण्यात् पृथक् भक्तिनिर्देशः। तुल्यान्तयोः साम्नोः संनिपाते जामि तदनादेशे क्वचिदपि न कार्यम् इति मर्यादा। तथा च सूत्रम्—
14 **स्वाराणि हाइकारस्वाराणि पदानुस्वाराणि च तेभ्योऽन्यानि ऐड-**

---

1. HO. अनुग्रहणसंयुक्तम् for अनुगृह्णाति। संयुक्तम्.

2. HO. om. आभावेन; S[1]. अहनः for आभावेन; B[1]. आभवति for भवति.

4. A. एकारेण त्रयाणां, M. एवाकारेण त्रयाणां, B[1]B[2]. एवकारेण त्रयाणां for एकार्षेयाणां; B[2]MA. तेषां for केषांचित्.

7. HO. om. विनियोग इति...समीक्षेत (L. 8).

9. HB[1]. छन्दसा for छन्दसां; H. अनुष्टुप्छन्दसं for अनुच्छन्दसं.

11. M. अनुपद for अनुवाद; S[1]. सकलकार्यं, MAB[1]B[2]. सांकर्य° for संकलय्य.

12. AHB[1]B[2]. विभक्ति° for भक्ति°; H. °निर्देशं for निर्देशः.

13. HB[2]A. संनिपातो for संनिपाते; H. जामिवद् for जामि तद्; AB[1]B[2]. om. इति मर्यादा; M. om. मर्यादा.

14. AB[1]B[2]. स्वारपदानु° for स्वाराणि पदानु°.

**वाङ्निधनेभ्यश्च निधनवन्ति सर्वेषां तुल्यान्तसंनिपाते जामिवाचोऽन्यत्र तन्न कुर्यादनादेश** इति। पुनः प्रयुक्तिः संचारः। स चैकस्मिन्नहनि अनादेशे सर्वथा परिहार्य इति प्रतिहतोऽयं पन्थाः। तदुक्तम्—**न पुनः समानेऽहनि साम्नः संचारो विद्यतेऽन्यत्र गायत्रादिति**। अहर्भेदेऽप्येकस्मिन् क्रतौ केषांचिदेव दृष्टसंचाराणां बृहद्रथन्तरवामदेव्यगौरीवितयज्ञायज्ञीयानाम् असावनुज्ञायते। अन्येषां तु वर्ज्य एव। तथा च निदानम्—**संचारयेदिह नानाहस्सु यानि संचारिधर्माणि स्युः** इति। सूत्रकारश्च—**शक्करीषु षोडशिना स्तुवीत यः कामयेत वज्री स्याम्** (        ) इति। काम्ये षोडशिकल्पे महानाम्नीनां षोडशिसामत्वं व्याख्याय तासां स्थाने परोक्षदर्शनात् तदुद्धार इति वदन्नहर्भेदेऽपि संचारिणं परिहरत्येव। तत्र जाम्यसंचाराभ्यां विनियोगव्यवस्थामुदाहरिष्यति—**सौपर्णानामैडं साप्तमिकम्**।

---

1. M. सर्वेषु for सर्वेषां; B¹M. तुल्यान्तः for तुल्यान्त°; B². पातो for °पाते.

2. HO. om. तन्न; HO. प्रयुक्तस्य पुनः प्रयोगः, MB¹. पुनः प्रयुक्त, S¹. प्रयुक्त° for पुनः प्रयुक्तिः.

3. MAB¹B². om. सर्वथा; S¹. सर्वक्रतौ for सर्वथा; M. हतः for प्रतिहतः.

5. AMB¹B²S¹. om. क्रतौ; MAB¹B². दृष्टः संचारः for दृष्टसंचाराणां.

6. HO. °यज्ञीयादीनां for °यज्ञीयानां.

7. S¹. संचारि° for संचार°. AB¹B². °धर्मिणि for °धर्माणि.

8. H. षोडशिसाम्नः, O. षोडशिसाम, B². षोडशिनाम्नः for षोडशिना.

9. MB¹B²A. °कामत्वं for सामत्वं; M. om. व्याख्याय; HO. व्याख्यायतां संज्ञा। ते, B¹. व्याख्यायता स्वं...(broken), B²A. व्याख्याय तां स्वस्थाने for व्याख्याय तासां स्थाने; A. परोक्षं, B¹. परोर्थ°, B². परोक्षित for परोक्ष.

10. B¹. इतिवदनहर्भेदे, H. इति वद- (broken) हर्भेदे for इति वदन्नहर्भेदे; HB¹O. संचारिणां for संचारिणं; HO. परिहार्यः for परिहरति; AB¹B. तत्राजाम्य for तत्र जाम्य°.

11 MB¹B²A. उदाहरिष्य इति for उदाहरिष्यति.

**स्वारं नावमिकम्। निधनवदाष्टमिकम्** (प्र.सू.४.११) इति। तत्र तावत् सप्तमेऽहनि निधनवतः संतनिनः परस्तात् स्वारस्य रोहितकूलीयस्य पुरस्तात् सौपर्णं विधीयमानं यदि स्वारं निधनवत् स्यात् ततो जामि स्यात्। तस्मात् ऐडमेव विज्ञायते। नवमे तु निधनवतो हाविष्कृतवैश्वमनसयोर्मध्ये विधीयमानं
5 सौपर्णं यदि निधनवत् स्यात् ततो जामिप्रसङ्गः। अथैडम्। ततः सप्तमेऽहनि प्रयुक्तस्य पुनः प्रयोगात् संचारदोषप्रसङ्ग इति स्वारमेव विज्ञायते। अष्टमे तु विलम्बसौपर्णं भवतीति विशेषवचनादेव निर्णयः सिद्ध इति स्थानच्छान्दसपाठ-क्रमस्तेन व्यवस्थां वैष्णवौक्ष्णोरन्ध्रादिषूदाहरिष्यति। तथा **दीक्षणीयायां ताक्ष्यसामनी गायेत् त्यमूष्वित्येते** इति सूत्रम्। तत्र तयोरनुपूर्वं प्रयोगः।
10 तथा चतुर्वीरस्य तृतीयेऽहनि कल्पः—**त्वाष्ट्रीसामनी स्वारे अन्तरान्धीगवम्** (आ. क. सू. ७. ३. ४.) इति। तत्र छान्दसाध्याये त्वाष्ट्रीसाम्नोः स्वारयोर्यत् पूर्वमनभ्यासं तदत्रान्धीगवस्य पुरस्तात् भवति। परं तु साभ्यासं परस्तादिति व्यवस्था। एवमन्यान्यप्युदाहरणानि द्रष्टव्यानि। चकारोऽनुक्तसमुच्चयार्थः। तेन क्वचिन्नामधेयान्तरमूढैः स्वतन्त्रैश्च तत्र तत्र वक्ष्यमाणैर्वचनैः व्यवस्था
15 द्रष्टव्या ॥ ४ ॥

---

3. B[1]B[2]AS[1]. after निधनवत् add : वा ; M. om. तस्मात् ..स्यात् (L-5) ; HOS[1]. om. तस्मात्.

5. O. जामित्र for जामि.

6. AHB[1]B[2]S[1]. om. °दोष°.

7. B[1]. एवं for एव ; HO. सिद्धः स्थानं छान्दसं for सिद्ध इति स्थानच्छान्दस°.

8. AMB[2]. वक्तव्यः पक्षान्, B[1]. वक्तव्यः पक्षां, H. व्यवस्था for व्यवस्थां.

10. MB[1]B[2]. साम्नि for सामनी.

12. M. पूषमनुष्यासम् for पूर्वमनभ्यासं ; B[2]. साध्यासं for साभ्यासं ; MAB[1]. पुरस्तात् for परस्तात्.

14. AMB[1]B[2]. om. तेन ; HB[1]O. नामान्तरमूढैः for नामधेयान्तरमूढैः ; HO. om. one तत्र.

अथ विनियोगज्ञानं भक्तिज्ञानं च साम्नां तत्तन्नामधेयैरुपादीयमानानां विशिष्टस्वरूपावधारणेन विना न सिध्यतीति तदुपायं षड्भिः सूत्रैरुपदिशति—

## प्रतिहारग्रहणेनेदन्तां साम्नः प्रतीयात् ॥ ५ ॥

प्रतिहारभूतस्य सामांशस्योपादानेन तत्तन्नामधेयप्रत्याय्यस्य **साम्नः इदन्तां प्रतीयात्**। विशिष्टस्वरूपमवधारयेदित्यर्थः। वक्ष्यति—**बृहद्भारद्वाजम्। अस्य याज्ञा। आऔहोवा** (प्र. सू. ३. १.) इति। तत्रोपात्तस्य सामांशस्य धारणत्वेना**ग्निं दूतम्** (सा. ३) इत्यस्यां गीयमानं सत् **बृहद्भारद्वाज**मित्युच्यते। तस्य चायं प्रतिहार इत्यर्थो भवति। एवं नावाहा इत्यो-(त्यौ ?) शनमित्यादावपि द्रष्टव्यम् ॥ 5

## संनिपाते च पूर्वं ॥ ६ ॥ 10

प्रतिहारत्वेनोपात्तस्य सामांशस्य साधारणत्वेन द्वयोः साम्नोः **संनिपाते** तयोः **पूर्वं** सामोपात्तं प्रतीयात्। वक्ष्यति—**साकमश्वम्** **सया२३हा३४३ इ** (प्र. सू. ३. ३) इति। तत्र **एहूयूषु ब्रवाणि ते** (ग्रा. १. १. ७. १-२) इत्यनयोः पूर्वं साकमश्वमिति सिध्यति। एवं **गौतमस्य मनाघम्। कण्वेऽ२षुस्रू २३** (ग्रा. ७. २. २५२. १) इत्यादावपि द्रष्टव्यम् ॥ ६ ॥ 15

---

1. HO. after च adds:— भवति; M. om. साम्नाम्; AB[2]. नामधेयोपादीयमानानां for नामधेयैरुपादीयमानानां.
2. AB[1]B[2]M. तदुपात्तैः for तदुपायं षड्भिः सूत्रैः.
4. B[1]M. प्रत्ययस्य, B[2]. प्रत्यायस्य, HO. प्रत्याध्यस्य for प्रत्याय्यस्य.
5. HO. om. प्रतीयात्; AMB[1]B[2]S[1]. om. विशिष्टस्वरूपमवधारयेत्.
6. AMB[1]B[2]S[1]. om. तत्रोपात्तस्य ...द्रष्टव्यम् (L. 9.).
10. B[1]. om. संनिपाते च पूर्वम्।
11. MB[1]B[2]AS[1]. तत्रोपात्तस्य for प्रतिहारत्वेनोपात्तस्य; H. धारणत्वेन for साधारणत्वेन.
13. B[1]. om. इति.
14. B[1]. om. सिध्यति.

## क्रमलिङ्गाभ्यां च ॥ ७ ॥

इदन्तां साम्नः प्रतीयादित्यनुवर्तते। **क्रम** आनुपूर्व्यम्। **लिङ्गं** चिह्नम्। ताभ्यामपि साम्नामिदन्तां प्रतीयात् अवधारयेत्। वक्ष्यति—**आरूढवदाङ्गिरसम्॥ आसितयोर्न्यार्य्यौ** (प्र. सू. ३.४७-४८) इति। तत्रानुपूर्व्येण
5 आरूढवदाङ्गिरसादनन्तरे **राये अग्ने** (ग्रा. ३.१०.९३.१-२.) इत्येते आसिते इति सिध्यति। लिङ्गात् **इत एत उदारुहन्** (सा. ९२.) इत्येतदारूढवदाङ्गिरसमिति। एवमन्यत्रापि बोध्यम् ॥ ७ ॥

## संख्यानादेशे वर्गाद्यम् ॥ ८ ॥

यदा कांचिदृचं प्रतीकेनोपादाय एतावतीदं सामेत्येवं सामसंख्या
10 नादिश्यते तदा तस्यामृचि गीयमानस्य सामगणस्याद्यं प्रतीयात्। वक्ष्यति—**यामम्॥ आइया वृषा च** (प्र.सू.१०.३६-३७) इति। तत्र **वृषा मतीनाम्** (स. ५५९) इत्यत्र गीयमानस्य सामत्रयस्य आद्यं याममित्यर्थो भवति ॥ ८ ॥

## अन्त्यमिति दशतः ॥ ९ ॥

दशच्छब्देन दशवर्गाभिधायिना खण्डापरपर्यायोऽनुवाकोऽत्राभिधीयते।
15 छान्दसाध्यायेऽनुवाकार्थं प्रायेण दशर्चपरिमितत्वात् **अन्त्यमिति** अविशेषोक्तौ

---

2. HB¹S¹. वर्तते for अनुवर्तते; O. om. अनुवर्तते...आरूढवदाङ्ग (L. 4).

3. B¹H. साम्नः for साम्नाम्; HB¹B²AS¹. om. प्रतीयात्.

4. H. °पूर्वेण for °पूर्व्येण.

5. B. अ नन्तरं for अनन्तरे.

7. HO. द्रष्टव्यम्, B¹. बोद्धव्यम् for बोध्यम्.

9. HO. यदा किंचित्, MB¹B²A. यांकांचित् for यदा कांचित्.

10. AB¹B². निर्दिश्यते, S¹. न दृश्यते for नादिश्यते; HO. °ग्रहणस्य for °गणस्य.

12. AB². गीयमान for गीयमानस्य; HO. om. सामत्रयस्य.

14. MB¹B². °पर्यायानु° for °पर्यायोऽनु°.

15. AM. छन्दस° for छान्दस°; MHOS¹. विशेषोक्तौ for अविशेषोक्तौ.

प्रस्तुताया दशतोऽन्त्यं साम प्रतीयात्। वक्ष्यति—**अगस्त्यस्य राक्षोघ्नमन्त्यम्** (प्र. सू. ३. ६३) इति। तत्र **प्रमंहिष्ठे**त्यस्या दशतोऽन्त्यं **यद्वा उ विश्पतिः** (सा. ११४) इति। एतत्साम अगस्त्यस्य राक्षोघ्नमिति सिध्यति ॥ ९ ॥

## संनिपाते चानन्तरायाम् ॥ १० ॥

अन्त्यमिति [अनुवर्तते।] निर्देशयोः द्वयोः **संनिपाते चानन्तरायां** दशतिद्वितीयं निर्देशं प्रतीयात्। **वसिष्ठस्य वैराजमन्त्यं तन्मरायम्। भरद्वाजस्य प्रासाहमन्त्यम्** (प्र. सु. ३. ३९-४०) इति। तत्र पूर्वेणा-न्त्यशब्देनाजुहोतेत्यस्याः प्रस्तुताया दशतोऽन्त्यम् **अग्निं नर** (ग्रा. २. ७. ७२. १-२) इति एतयोर्द्वितीयमुच्यते। परेण तु तदनन्तराया **अबोध्यग्निः** (सा. ७३) इत्यस्या दशतोऽन्त्यमिति ॥ १० ॥

एवमानुषङ्गिकार्थविषयाः परिभाषाः समाप्य पुनः प्रतिहारमुपसंक्रम्याह—

## सामपूर्वग्रहणेन न्याय्यमग्राम्येषु ॥ ११ ॥

**अग्राम्येषु** आरण्यकेषु सामसु। **सामपूर्वग्रहणेन** ऋक्प्रतीकात् पूर्वमेव सामनामधेयस्य ग्रहणेन **न्याय्यं** प्रतिहारं प्रतीयात्। उदाहरणम्—**अन्तरिक्षं पिबा** (आ. गा. ९-१०) **बृहत् त्वामिद्धि** (र. गा. द. ५) इत्यादि ॥ ११ ॥

---

1. MS[1]. प्रस्तुतायां for प्रस्तुतायाः.

5. HO. after इति adds :— च ; AMB[1]B[2]. om. द्वयोः ; HB[1]B[2]O. om. च.

6. HO. दशतिद्वितीयां for दशतिद्वितीयं.

7. B[2]. भारद्वाजस्य for भरद्वाजस्य ; AB[2]. om. तत्र.

9. HO. transp दशतः before अबोधि.

10. B[1]H. अस्य for अस्याः.

11. M. संगृह्य for संक्रम्य.

13. B[1]AM. न्याय्यं प्रतीयात्, B[1]. प्रतीयात् for ऋक्प्रतीकात्.

14. HO. ग्रहणं न्याय्यम्। for ग्रहणेन न्याय्यं.

15. HB[2]. त्वामिति for त्वामिद्धीति.

## संख्यानामेकिप्रभृतीनां यथासंख्यं पदं प्रतीयात् ॥ १२ ॥

**एकि**शब्देनात्र प्रथम उच्यते। प्रथमद्वितीयादीनां संख्याशब्दानां वाच्यत्वेन तत्तत्संख्याविशिष्टं पदं प्रतीयात्। वक्ष्यति—**चतुर्थ्यां यण्वापत्य-योरुत्तरयोः स्तोत्रीययोर्द्वितीये सस्तोभे** (प्र. सू. १२. १०.) इति। तत्र द्वितीयौ पादावित्यर्थो भवति। एवं **रैवते तृतीये मध्यमोऽभ्यासः। 5 शाक्वरे चतुर्थं सस्तोभम्** (प्र. सू. ११. १२ - १३.) इत्यादावपि द्रष्टव्यम्॥ १२॥

## उत्तरयोरिति च ॥ १३ ॥

**उत्तरयोरिति च** निर्देशेन पदं प्रतीयात्। वक्ष्यति—**इहवद्दार्ढ्य-** 10 **च्युतमुत्तरयोर्द्व्यक्षरौ** (प्र. सू. ८.३४.) इति। तत्र उत्तरयोः पादयोरित्यर्थो भवति। एवं **रेवतीषूत्तरयोश्चतुरक्षरौ** (प्र. सू. ११. ३१.) इत्यादावपि प्रत्येतव्यम्॥ १३॥

## एकं चेदार्षेयमुक्त्वानेकं साम ब्रयात्तावतां तदार्षेयं प्रतीयात्। प्रतीयात्॥ १४॥

15

### इति श्रीकात्यायनकृते प्रतिहारसूत्रे द्वितीयः खण्डः ॥ २ ॥

अत्र **ब्रूयात्** इत्यात्मानमेवाचार्यः परोक्षे निर्दिशति। यथा **गोनर्दीय आहेति** महाभाष्यकारः। यद्येकं **नामधेयमुक्त्वा अनेकं साम** प्रतिहार- 18 ग्रहणादिना **ब्रूयाद**यं ग्रन्थकारः तावतां साम्नां **तद्** एव नामधेयं प्रत्येतव्यम्।

---

2. MHB¹. एक° for एकि° ; B¹B²AMS¹. om. प्रथम उच्यते.
3. AB²M. यत्तत् for तत्तत्.
5. H. द्विवतीये for तृतीये.
9. B²A. निर्देशे पदं पदं, M. देशे ..पदा पदं, for निर्देशेन पदं.
13. MH. नैकं for अनेकं.
16. H. आम्नायम्, O. आम्नातम् for आत्मानम् ; HO. परोक्षं for परोक्षे.
17. HO. एवं for एकं ; HO. नैकं for अनेकं.

वक्ष्यति—**सौहविषम्** । **पूष्णे ३ होइ ॥ पूष्णे भ ३ गाया ॥ पूष्णौवा आ २ ३ ४ वा** ॥ (प्र. सू. ७-२२) इति । तत्र प्रतिहारग्रहणेनोपात्तानां त्रयाणां साम्नामपि **सौहविष**मित्येतदेवार्षेयमिति सिद्धं भवति । एवं त्वाष्ट्रीसाम **पवाइत्रवा३** (ग्रा. १६.८.५४७.१.) इत्यादावपि द्रष्टव्यमिति ॥

केचिदिदं सूत्रमन्यथा व्याचक्षते । ऋषिविषयेयं परिभाषा । कथमार्षेय-शब्देन ऋषिरेवोच्यते । ब्रूयादित्यत्र **चार्षेयब्राह्मणं** कर्तृत्वेन हि प्रतीयते । एकमृषिमुक्त्वा अनेकं साम तत्तन्नामधेयमात्रोपादानेन यदि ब्रूयादार्षेयब्राह्मणं तदा तेषां सर्वेषां तदार्षेयं प्रकृतमेवर्षिं विद्यात् । उदाहरणम्-**तौरश्रवसे द्वे** ॥ **धेनुपयसी द्वे** ॥ (आ. ब्रा. ६. २. ३. ३-४.) इति । तत्र **तौरश्रवसे द्वे** इत्यत्र प्रस्तुततुरश्रवा एव **धेनुपयसोरपि** ऋषिः प्रत्येतव्य इति। तदेतदयुक्तम् । न हि ऋषिविषयपरिभाषाकरणमत्र प्रस्तुतोपयोगि । किंच **तौरश्रवसे** इत्यत्र वृत्तौ गुणीभूतस्य तुरश्रवस उत्तरत्रानुकर्षो न शक्य इति नैतदुदाहरणं सांप्रतम् । न च पूर्वप्रकृत एव ऋषिरुत्तरेष्वपि अनुक्तर्षिषु संबध्यत इत्यत्र प्रमाणं किंचिद्-दर्शयितुं शक्यम् । प्रत्युतैवं **सत्यग्नेरायुरग्नेर्हरसी द्वे** । (आ. ब्रा. १. ५. १०-११) । **वसिष्ठस्य पदे द्वे** ॥ **वसिष्ठस्यानुपदे द्वे** (आ.ब्रा.५.१०.१.) इत्यादिषु द्वितीयस्य अग्न्यादेरुपादानं व्यर्थं स्यात् ।

अपि चैवं पूर्वोदाहृतानामनिर्दिष्टनामधेयानां साम्नां नामधेयसंबन्धे को निर्वाहः । तस्मादस्य सूत्रस्य पूर्वमेव व्याख्यानं साधु । यानि त्वार्षेय-ब्राह्मणेऽनुक्तर्षीणि सामानि तेषां केषांचित् **पञ्चविंशतिकब्राह्मणे** विध्यर्थवाद-

---

3. M. एतावत् for एतत् ; B¹AB²M. trans अपि before साम्नाम्.

6. HO. वा for च ; HO. अभिप्रेयते for हि प्रतीयते.

11. S¹. अप्रस्तुत° for अत्र प्रस्तुत°.

12. AM. गुण° for गुणी° ; B¹O. शक्यते for शक्यः ; MHO. उदाहरणम् । संप्रति, B². उदाहरणम् । सांप्रतं for उदाहरणं सांप्रतम् ।

13. HO. सर्वं° for पूर्वं° ; B¹B². अनुकर्षिषु, A. अनन्त्यर्षिषु, S¹S². अनुक्तेषु for अनुक्तर्षिषु.

19. HO. °ब्राह्मणानुक्तानि, M. °ब्राह्मणोक्त ऋषीणि for ब्राह्मणेऽनुक्त-र्षीणि.

वाक्यैरस्य विज्ञानम् । तद्यथा—**गौतमस्य भद्रं भवति** । (तां.ब्रा.१३.१२.६.)
**एभ्यो वै लोकेभ्यो रसोऽपाक्रामत्तं प्रजापतिराक्षारेणाक्षारयदित्याक्षा-रस्य [आक्षारत्वम् ।।]** (ता. ब्रा.११.५.१०) **ते देवास्तपोऽतप्यन्त । त एतदरिष्टमपश्य [ंस्ततोऽयं देवानामभ्रत् सꣳसोऽभवद्यमसुराणां न स समभवदनेनारिषाम] इति [तद] रिष्टस्य ।** (तां. ब्रा. १२.५.२३)
इत्यादि । केषांचित्तु शाखान्तरेभ्यः ऋषिविज्ञानमिति निर्णयः ॥

अन्ये त्वाहुः—पृथङ्निर्देशेन तद्धितवृत्त्या वा येषामृषयो न श्रुताः तेषां तत्तन्नामधेया एवर्षयः कल्पयितव्याः । तद्यथा संहितस्य संहितः । सुरूपस्य सुरूपः । बृहत्कस्य बृहत्क इत्यादि । तद्धितस्तु अभेदोपचारस्य विवक्षितत्वान्न कृत इति ॥

अपरे तु अनुक्तर्षीणां प्रजापतिरेव ऋषिरित्याहुः । **सर्वं हीदं प्राजा-पत्यम्** इति श्रवणादित्यलमतिप्रसङ्गेन ॥

द्विरुक्तिः परिभाषाप्रकरणसमाप्तिसूचनार्था ॥ १४ ॥

इति श्रीवामनार्यसुतवरदराजविरचितायां दशतयीवृत्तौ
प्रतिहारसूत्रव्याख्यायां द्वितीयः खण्डः ॥ २ ॥
परिभाषाप्रकरणं समाप्तम् ॥
ॐ

---

1. HO. वाक्येऽस्य ऋषिविज्ञानम् for वाक्यैरस्य विज्ञानम् ; S[1]. after भवति adds :—इति.

2. AMB[2]. आक्षारयति for आक्षारयत्.

6. B[1]A. एवमादि, M. एवमादिः for इत्यादि ; S[1]. शाखान्तरेषु for शाखान्तरेभ्यः.

7. B[2]M. तद्धितप्रत्या वा, B[1]. तद्धितप्रत्याद् वा, HO. अधीतवृत्त्या वा for तद्धितवृत्त्या वा.

8. H. °नामधेयैः for नामधेयाः.

9. M. भेदोपचारस्य, B[1]. तदोपचारस्य for अभेदोपचारस्य ; HO. अधीत स्वभेदोपचारं विवर्द्धितत्वा for तद्धितस्तु...विवक्षितत्वात्.

10. S[1]S[2]. विकृतः for कृतः

12. HO. प्रसङ्गेन for अतिप्रसङ्गेन.

# तृतीयः खण्डः

## ग्रामेगेयम्

एवं द्वाभ्यां खण्डाभ्यां प्रतिहारादिविषयाः परिभाषाः कृत्वा अनन्तरं द्वादशभिः खण्डैः यज्ञसंयुक्तानां साम्नां छान्दसाध्यायक्रमेण प्रतिहारादिकं प्रतिपदमुपदिश्यते । अस्माभिश्च तेषामृषयः प्रस्तावनिधने च प्रयोगसौकर्याय तत्र तत्र प्रदर्शयिष्यन्ते ॥ 5

बृहद्भारद्वाजम् अस्यया २३ज्ञा । आ । औं ३ हो वा ॥ १ ॥

अग्निन्दूतम् (ग्रा. १.१.३.१.) इत्येतत् बृहद्भारद्वाजम् । भरद्वाजेन दृष्टमिति भारद्वाजम् । तस्य पर्व प्रस्तावः । **जाराग्निंदूतोपक्रमाणां ते एवाविभाग्यानाम्** (पु.सू.१०.१०.२०.) इति प्रस्तावप्रकरणे वचनादिति तस्यार्थः । 10 प्रथमजराबोधीयप्रथमपर्वसदृशस्वरा पर्वजातिर्जारेत्युच्यते । बृहद्भारद्वाजम् । **अस्यया २३ज्ञा । आ । औं ३ हो वा** (ग्रा.१.१.३.१) इति प्रतिहारः । न्याय्यस्याप्यस्य पुनः पाठः साम्न इदन्ताप्रत्ययार्थः । उक्तं हि—**प्रतिहारग्रहणेनेदन्तां साम्नः प्रतीयात्** (प्र.सू. २. ५.) इति । एतेनैतदपि चोद्यं निरस्तम् । आसितयो- 15

8. S[2]HS[1]. °विषयां परिभाषां for °विषयाः परिभाषाः.

5. HO. उद्दिश्यते for उपदिश्यते.

11. HO. तस्योर्ध्वं for तस्यार्थः ।.

12. HO. प्रथमं जराबोधीये for प्रथमजराबोधीय°; M. जारास्वरा for जारा.

13. M. न्यायस्य for न्याय्यस्य ; M. om. अपि.

14. H. च for हि.

15. HO. चोद्य° for चोद्यं.

न्याय्यावित्यादिवत् बृहद्भारद्वाजस्य न्याय्य इत्येव सिद्धे प्रतिहारस्य स्वरूपेण पाठः किमर्थ इति। इडान्तानां सर्वेषां साम्नाम् इडेति निधनम्। **परि प्रिया दिवः कविः** (सा. ४७६) इत्यत्रोदूहेन द्वितीयस्वरा अग्निन्दूता। तथा च संहितोपनिषत्—**चतुर्थोदात्ततमान् स्वरान् द्व्यन्तरानुदूहन्ति।**
5 **प्रागुपायान्न चेत् समानपुरुषवचने॥ तृतीयप्रभृतीनामुदात्ततमः कश्चित् स्वरो भवति। तमुदूह इत्याचक्षते॥ तथा च यज्ञे क्रियते॥ अरण्येगेयं चाधीमहे** (सं. उ. ब्रा. ३. २-५.) इति। तत्र **चतुर्थोदात्ततमानि**त्यनेन चतुर्थमन्द्रातिस्वार्याणामेव स्वराणामुदूहः। न तु तत्र उदात्ततमानां तृतीयप्रभृतीनामित्युच्यते। **द्व्यन्तरान्** इति क्रियाविशेषणम्। तथा चतुर्थस्य
10 प्रथमत्वम्, मन्द्रस्य द्वितीयत्वम् अतिस्वार्यस्य तृतीयत्वमिति। उदाहरणम्— औशनबृहद्भारद्वाजदैर्घश्रवसादिषु **प्रागुपायादि**ति उपायशब्देन उपद्रव उच्यते। अनेनोपद्रवनिधनयोरुदूहप्रतिषेधः। यथा—वात्सादिषु **न चेदि**त्यादिना समानभक्तौ तृतीयद्वितीयाद्युच्चस्वरवतां साकमश्वपौरुमीढगौरीवितादीनामुदूहनिषेध इति॥ १॥

15 **ना१वा २३ हा२ ३४३ इत्यौशनं न्याय्यो वा॥ २॥**

**प्रेष्ठं वः** (ग्रा. १.१.५.१-३.) इत्येषामाद्यमौशनम्। उशनसा काव्येन
17 दृष्टम् इति। येषामृषीणाम् **आर्षेयब्राह्मणे गोत्रं** न श्रुतं तेषां **पञ्चविंशतिक-**

---

2. AMB[1]B[2]. इडानां for इडान्तानां; M. ज्यतिः for इडेति.

3. HO. ऊहेन for उदूहेन.

8. AMB[2]. °स्वार्यम् for स्वार्याणाम्; HO. om. एव; HO. न किंतु ततः for न तु तत्र; S[1]S[2]. om. तत्र.

9. द्वयन्तरान्. It appears that the readings accepted by the commentator was द्व्यन्तरम् and not द्यन्तरान् as otherwise it cannot be called क्रियाविशेषण, an adverb; OS[1]S[2]. यथा for तथा.

13 HO. द्वितीयान्धास्वरवतां for द्वितीयाद्युच्चस्बरवतां.

15. M. नावाहाइ for नावाहा.

16. MH. एतेषाम् for एषाम्.

17. HB[1]O. °विंशक° for °विंशतिक°,

ब्राह्मणाच्छाखान्तरेभ्यश्च गोत्रविज्ञानम्। **ऋषीणां नामधेयगोत्रोपधारणं स्वर्ग्यम्** (आ. ब्रा. १. १. २-३.) इत्यादिश्रुतेः। गोत्रविज्ञानस्य अवश्य-कर्तव्यत्वात् अस्य पर्व प्रस्तावः। सोमसामगायत्रीक्रौञ्चवैरूपौदलगायत्र्यौशनसैन्धु-क्षितवारवन्तीयोत्तरमैधातिथरौहितकूलीयेहवदैध्मवाहेन्द्रस्ययशःकण्वबृहत्त्रैष्टुभश्या - वाश्ववार्षाहरवाजभृत्कार्णश्रवसानां चत्वारीति वचनात्। आद्यायां तु स्तोत्रियायां 5

न्यूनाक्षरत्वात् त्र्यक्षर एव प्रस्तावः। **नावा २३ हा ३४३ इ** इति प्रतिहारः। **अग्नाइरा ३ था ३ म्** इति वा। **नावाहा इत्यौशन**मित्यस्मिन्निर्देशे गतिलोपः सांहतिकः। **अगतिस्तोभस्य स्वरे प्रत्यये संधौ** (पु. सू. ५. ५. २.) इति फुल्लोक्तेः। हाइकारस्वराणां सर्वेषामन्त्य इकारो निधनम्॥ २॥

## साकमश्वम्। स य २३ हा ३ ४३ इ॥ ३॥ 10

एह्यूषु (ग्रा. १.१.७.१-२.) इत्यनयोराद्यं **साकमश्वम्**। तस्य शुनःशेप ऋषिः। **साकमश्वस्य शौनःशेपेः सामनी द्वे** (आ. ब्रा. १.२.७.) इत्यार्षेयब्राह्मणात् तस्य पादः प्रस्तावः। **पद्योऽनादेश** इति वचनात्। **आ यः पुरम्** (सा. १७७४) **अग्ने तमद्य** (सा. १७७७) इति विच्छन्दःसु गीतेन भक्तिनिर्णयः। **वैच्छन्दसेषु गीतं प्रास्ताविकमेव स्यात्** (पु.सू.१०.११.२०.) 15 इति फुल्लवचनात् प्रातिहारिकमेव गीतम्। **प्रतिहारो वैच्छन्दसेष्वपदादौ** इति सूत्रवचनाच्च॥ ३॥ 17

---

1. HO. °ब्राह्मणे for ब्राह्मणात्.
3. M पूर्वं for पर्व.
7. O. om. अग्नाइ...सांहतिकः; H. भवति इलोपः for गतिलोपः
11. OH. om. तस्य शुनः शेप ऋषिः.
15. B[1]B[2]. निश्चयः for निर्णयः.
16. B[1]. om. फुल्ल; MAB[1]B[2]. om. प्रतिहारिकमेव गीतम्.
17. AB[1]B[2]M. after वैच्छन्दसेषु add: अपि.

अथ द्वे साकमश्वे स्तः। इदं स्वारं त्वावत (सा. १९३) इत्यैडं च। तत्र आ यः पुरं नार्मिणीमदीदेद् (ऊ.गा.प्रा.२६ ; सा.१७७४.) इति साकमश्वम् ; अग्ने तमद्याश्वं न स्तोमैः (ऊ. गा. प्रा. २७ ; सा. १७७७.) इति साकमश्वम् इत्यादावुक्तविषये कतरत् साकमश्वं ग्राह्यमिति संदेहे निर्णयमाह—

5 **तदुक्थेषु ॥ ४ ॥**

तत्स्वारमेव साकमश्वमुक्थेषु ग्राह्यम्। न त्वैडम्। कुत एतत्। ज्योतिष्टोमे तावदुक्थेषु एह्यूषु (ऊ.गा.द.१५ ; सा. ७०५) इत्यत्र साकमश्वस्य विधानात्। स्वयोनिनि सर्वत्राभिरूपतराण्यस्वयोनिभ्यः ( ) इति निदानवचनाच्च। ज्योतिर्विकारादिष्वपि विकृतिषु प्राकृतसामान्तयोगस्य न्याय्य-
10 त्वात्तस्यैव ग्रहणम्। दाशरात्रिके त्वष्टमेऽहनि तदु धुरां सामेत्याहुरिति श्रुत्यैव विशेषः सिद्धः। छन्दोमपवमानादिष्वपि आमहीयवादुत्तराण्याशुप्रभृतीनि षडित्यादिवचनात् तस्यैवातिदेश इति ॥ ४ ॥

**वात्सम्। अग्नाइत्वा ३० का ३ ॥ ५ ॥**

आ ते वत्स (ग्रा. १.१.८.१-२.) इत्यनयोराद्यं वात्सं वत्सस्य
15 काण्वस्य सामनी द्वे इति तस्य पर्व प्रस्तावः। अग्निन्दूतोपक्रमत्वात् न्याय्यः
16 प्रतिहारः ॥ ५ ॥

---

1. H. स्वरान्तं for स्वारं.

8. AB[1]M. स्वयोनीनि for स्वयोनिनि ; HO. °रूपतरास्ते for °रूपतराणि.

9. HO. ज्योतिर्विचारादिषु विकृतिषु प्रातःसवन° for ज्योर्विकारादिष्वपि विकृतिषु प्राकृतसामान्त°.

10. HO. त्वाग्नीष्टोमे for अष्टमे ; B[1]. तदुत्तरां for तदु धुरां.

11. HO. om. अपि.

15. AB[2]. कण्वस्य for काण्वस्य ; H. after तस्य adds : पूर्वस्य ; AB[2]. न्याय्य for न्याय्यः.

जराबोधीयम् । स्तोमाऽ०रुद्राऽ२३ ॥ ६ ॥

जराबोध (ग्रा. १. २. १५. १-२.) इत्यनयोरुत्तरं जराबोधीयम् । अग्नेर्जराबोधीये द्वे ॥ रुद्रस्य वा ॥ (आ. ब्रा. १. ३. ५-६.) इति । अस्य वान्तः प्रस्तावः । कावश्रौतकक्षार्षभत्र्यन्तायास्यैडौक्ष्णोरन्ध्रैडसौपर्ण मौक्ष जराबोधीयमार्गीयवयद्वाहिष्ठीयोत्सेधवाभ्रशौक्तस्वार सामराज पौरु- 5
मीढपूर्ववारवन्तीयवार्त्रतुरयण्वै रूपद्दस्वाबृहदोपशा महादिवाकीर्त्यानां वान्तः (पु. सू. १०.१०.१२) इति वचनात् न्याय्यः प्रतिहारः । इन्द्रमच्छ (ऊ. गा. अ. ११ ; सा. ६६४) इत्यत्र स आइन्दावा इति प्रतिहारः । प्र वाज्यक्षा (सा. ११६०) इत्यत्र पवाइत्रा १ वा २३ इ (ऊ. गा. क्षु. ८१) इति ॥ ६ ॥ 10

वारवन्तीयम् । वारवन्तं वन्दध्या ।
नमोभिः सम्राजन्ताम् ॥ ७ ॥

अश्वं न त्वा (ग्रा. १.२.१७.१-३) इत्येषां त्रयाणामाद्यान्त्ये वारवन्तीये भार्गवे द्वे शौनःशेपे वेन्द्रस्य वारवन्तीयं तृतीयं सर्वाणि वा भार्गवाणि सर्वाणि वा शौनःशेपानि सर्वाणि वा वारवन्तीयानि ॥ 15
(आ. ब्रा. १.३.८.) इति । तयोः प्रथमस्येदमुपादानम् । तस्य प्रथमो वान्तः प्रस्तावः । कावश्रौतकक्ष (पु.सू.१०.१०.१२) इत्यादिवचनात् । द्वितीयोऽपि 17

---

2. AB[2]MB[1]. अन्त्यं, S[1]S[2]. आद्यं for उत्तरम्.
3. MAB[2]. om. द्वे.
4. S[1]S[2]AB[1]B[2]M. तस्य for अस्य ; M. om. प्रस्तावः.
5. H. om. शौक्त.
10. H. after इति adds :— प्रतिहारः.
13. M. एतेषां for एषां ; H. आद्यं वारवन्तीयम् for आद्यान्त्ये वारवन्तीये ; M. आद्यन्ते for आद्यान्त्ये.
16. H. om. इदम्.
17. O. °कक्षमिति for °कक्षेति.

वान्तः प्रस्तावः इति पक्षान्तरम् । **द्विर्वा वारवन्तीये** (पु. सू. १०.१०.१४.) इति वचनात् उपात्तौ द्वौ प्रतिहारौ ॥ ७ ॥

## साम्राजन्ताम् इत्युत्तरे ॥ ८ ॥

तयोरुत्तरे त्रयाणामन्त्ये वारवन्तीये पर्व प्रस्तावः । **सोमसामगायत्री-**
5 **क्रौश्च** (पु. सू. १०. ११.) इत्यादिवचनात् । **स्तोभः पुरस्तादन्तर्वा प्रस्तोतुरन्ते चाविधाद्यः** (पु.सू. १०.१०. २-४) इति वचनाच्च । अविधाद्यः इत्ययमर्थः—आथर्वणमहावैश्वामित्रादिषु द्वितीयाया विधाया आद्यो यः स्तोभः स उद्गातुरेव न प्रस्तोतुरिति न्याय्यः प्रतिहारः ॥ ८ ॥

पक्षान्तरमाह—

10 ## स्तोभौ वा ॥ ९ ॥

द्वितीयतृतीययोः पादयोः **इहाहाइ** इति द्वौ स्तोभौ प्रतिहारावित्यर्थः । तथा च सूत्रम्—**इहाहाइ वारवन्तीये** इति ॥ ९ ॥

पक्षान्तरमाह—

## सप्त वा प्रागिहाहायाः ॥ १० ॥

15 **उत्तमे पादे प्रागिहाहायाः** सप्ताक्षराण्येक एव प्रतिहारः इत्यर्थः ।
16 तथा च सूत्रम्—**सप्तभिर्वैकप्रतिहारं प्रागिहाहायाः** इति । अत्रोत्तमं

---

3. AMB[2]. सम्राजाताम् for सम्राजन्ताम्; HO. इत्युत्तमे। for इत्युत्तरे ।.

4. AMB[1]B[2]. om. तयोरुत्तरे; M. तस्य पूर्वं for पर्वं.

6. H. वा for च; B[1]. चाविधा for च । अविधाद्यः.

7. M. एवम् for अयम्; H. द्वितीयायां for द्वितीयायाः; M. अविधायाः for विधायाः.

10. B[1]A. पदयोः for पादयोः.

11. MAB[1]B[2]. इहाहे for इहाहाइ.

14. M. om. उत्तमे पादे; MAB[1]B[2]H. °प्रतिहारं for प्रतिहारः; H. om. इति.

15. M. तत्र for अत्र; A. उक्तं for उत्तमं;

पदं प्रतिहारस्थानं संख्याशब्दे चास्तौभिकान्यक्षराणि उपरिष्टात् प्रतिहर्तुरिति परिभाषात्रयमुपतिष्ठते। तदेवमुत्तरे वारवन्तीये प्रतिहारस्य त्रयः पक्षाः। **त्वं नश्चित्र** (ऊ.गा.ए.१०६ ; सा. १६२३) इति वारवन्तीयस्य सर्वबृहतीकारः ककुबुत्तराकार इति पक्षद्वयमस्ति। तच्चोहाध्ययनसिद्धम्। तथा च वाजपेये निदानकारः—**त्वन्नश्चित्र अस्येति वारवन्तीयमग्निष्टोमसाम ककुबुत्तरासु ककुबुत्तरास्थानं हि सर्वबृहतीष्वेकः** इति। फुल्लकारश्चाह—**त्वन्नो वारे पुनाकण्वबृहतीप्रसोस्वतरेपुनाभिसो जम्भे चोत्तरयोः ककुभोर्विकल्पाः** (पु.सू. ९.१.२१.) इति। तत्र सर्वबृहतीकारपक्षे मध्यमायां **पर्षितोकन्तनयं पर्तृभिष्टू २३४ औहोवा** इत्येवमन्तं यथाध्ययनमुक्त्वा **इहाहाइ। ऊहुवावाम्** इत्यादि वाच्यम्। पक्षान्तरे **तुचाइतू २३४ ना** इत्युक्त्वा **पर्षाइतोहाइ** इत्यादि। एवमुत्तरायामपि द्रष्टव्यम् ॥ १० ॥

अस्य विच्छन्दस्सु द्विपदैकपदासु विशेषमाह—

**सप्ताक्षरन्याय्ययोः स्थाने**

**चतुरक्षरद्व्यक्षरौ द्विपदायाम् ॥ ११ ॥**

वारवन्तीयस्य सप्ताक्षरप्रतिहारपक्षे तत्स्थाने **परि प्रधन्व** (सा.१३६७.) इति। द्विपदायां चतुरक्षरः प्रतिहारः। **पूष्णाइ भगा ३४ औहोवा** इति न्याय्यपक्षे तत्स्थाने द्व्यक्षरः **पूष्णाइ** इति ॥ ११ ॥

---

1. H. वा for च ; B[1]. साख्या° for संख्या°.

3. HO. पूर्व° for सर्व°.

4. B[1]. om. च ; HO. ऊहाध्ययने for ऊहाध्ययन.

6. H. °स्थाने for °स्थानं.

11. B[1]S[1]. उत्तमायाम्, S[2]. उत्तरयोः, M, उत्तमायाः, H. उत्तरपदे for उत्तरायाम्.

16. B[1]. पूष्णाइ। भगा इति for पूष्णाइ इति.

ततोऽर्धेनैकपदायाम् ॥ १२ ॥

सुमस्मा वस्वी रन्ती (सा. १६५४) इत्येकपदायां सप्ताक्षरपक्षे तत्स्थाने द्व्यक्षरः प्रतिहारः। सूना औहोवा इति न्याय्यपक्षे सू इत्येकाक्षरः इति ॥ १२ ॥

5 अनयोरेकार्षेययोर्वारवन्तीययोर्विनियोगव्यवस्थामाह—

तदनादेशे ॥ १३ ॥

तत् उत्तममेव वारवन्तीयम् अविशेषोक्तौ ग्राह्यम्। यथा गर्गत्रिरात्रे तृतीयेऽहनि वारवन्तीयमग्निष्टोमसाम सु (आ.क.VI.५.३१-३३) इति। पूर्वस्य तु यत्रैव विशेषोक्तिस्तत्रैव ग्रहणमिति भावः। यथानुरूपाग्निष्टोमसाम्नि कल्पः।

10 चतुर्थस्याह्नो वारवन्तीयमग्निष्टोमसाम स्वासु यच्छन्दस्यम्। आश्वा औहोवा। इत्येतदिति। यथा वा रथन्तरपृष्ठे अप्तोर्यामे सूत्रम्—कालेयस्यर्क्षु वारवन्तीयम्। तस्य स्थाने पूर्वम् इति ॥ १३ ॥

सैन्धुक्षितम्। आच्छा २ नाप्त्वे २३ ॥ १४ ॥

अग्निं वो वृधन्ताम् (ग्रा. १. ३. २३. १-३.) इत्येतेषामाद्यं

15 सैन्धुक्षितम्। सिन्धुक्षिता दृष्टमिति। तस्य पादः प्रस्तावः। न्याय्यः

16 प्रतिहारः ॥ १४ ॥

---

6. HO. एकाक्षरयोः for एकार्षेययोः.

7. B[1]. om. उत्तमम्; HO. विशेषतः, M. विशेषोक्तौ for अविशेषोक्तौ; AB[2]S[2]. तथा for यथा; S[1]S[2]. om. °त्रिरात्रे.

9. AMB[2]. एवं for एव; S[1]S[2]. om. इति।

10. पूर्वस्य...स्वासु. (P-6); AMB[2]. षष्ठस्य for चतुर्थस्य.

11. B[1]. रथिन्तर° for रथन्तर°; B[2]. प्रष्ठे for पृष्ठे; M. after पृष्ठे adds: वारवन्तीयस्य.

15. B[1]M. पाद° for पादः

**द्वे खल्वेतस्यां सैन्धुक्षिते ॥ १४ ॥**

**अग्निं वो वृधन्ताम्** (सा. २१.) इत्यस्यामृचि उत्पन्ने त्रयाणामाद्यन्त्ये द्वे सैन्धुक्षिते ऊहाम्नाये दृश्येते । स्वारमैडं चेत्यर्थः ॥ १४ ॥

एतच्चानयोर्विनियोगनियमं दर्शयितुमुक्तम् । तमेव दर्शयति—

**चतुर्धा स्वारं माध्यंदिनमापद्यते ॥ १५ ॥** 5

तयोः **स्वारं** सैन्धुक्षितं **चतुर्धा माध्यंदिनं** पवमानमापद्यते । स्थानभेदात् प्रकारभेदं विवक्षित्वा धाप्रत्ययः कृतः । चतुर्षु स्थानेष्वित्यर्थः ॥ १५ ॥

केष्वित्याह—

**अभिषेचनीयगोसवयोश्छन्दोमपवमानपराकयोश्च ॥ १६ ॥**

अत्र द्वयोर्द्वयोः समानक्लृप्तत्वात् पृथग्विभक्तिनिर्देशः । तत्राभिषेचनीये 10
कल्पः—**उच्चातेजातमन्धस इति गायत्रं चामहीयवं च जराबोधीयं च स्वारं च सैन्धुक्षितम्** (आ. क. सू. ४. ८. ३.) इति । गोसवेऽपि **समानमितरदभिषेचनीयेने** (आ. क. सू. ५. ५. २.) ति तस्यैवातिदेशः । छन्दोमपवमाने तृतीयेऽहनि **ऋषभात् पवमानादुत्तराणि सुरूपं चादारसृक् चेडानां संक्षारं स्वारं च सैन्धुक्षितम्** (आ. क. सू. ६. ८. ३.) इति । 15
पराके च ॥ 16

---

2. B¹B²MA. om. ऋचि.
6. H. om. पवमानम्; HO. ते स्थानभेदात् । प्रकारभेदविवक्षितत्वाद्वा for स्थानभेदात् प्रकारभेदं विवक्षित्वा धा.
7. HO. after स्थानेषु adds: विद्यते.
10. AB²B¹. om. one द्वयोः.
13. MAH. इतरम् for इतरत्.
14. M. ऋषभः, OH. ऋषभ for ऋषभात्.
15. M. संक्षारः, A. संक्षारस्वारं for संक्षारं.
16. HOB¹. परागे for पराके.

अथ यदेव छन्दोमपवमानस्य उत्तममहस्तदेतदिति। अतोऽन्यत्र माध्यंदिने पवमाने सैन्धुक्षितमैडमेवेत्यर्थादुक्तम्। यथा दाशरात्रिके नवमेऽहनि ब्राह्मणम्—**सैन्धुक्षितं भवति। यदेव सैन्धुक्षितस्य ब्राह्मणम्** (तां. ब्रा. १५.३.११.) इति। यथा वा पृष्ठावलम्बे कल्पः—**पञ्चमस्याह्नः सन्तनिन उपरिष्टादैडं च सैन्धुक्षितं गौषूक्तं च** (   ) इति। अस्यां च व्यवस्थायाम् अजाम्यसंचारौ मूलम्॥ १६॥

## तदुक्थेषु॥ १७॥

उक्थेषु तत् स्वारं सैन्धुक्षितं ग्राह्यम्। यथा चतुर्थेऽहनि ब्राह्मणम्—**सैन्धुक्षितं भवति। सिन्धुक्षिद्धि राजन्यर्षिः** (ता. ब्रा. १२. १२. ५-६) इत्यादि। यथा वाभिप्लविके चतुर्थेऽहनि कल्पः—**सैन्धुक्षितं सौभरं वीङ्कमित्युक्थानि** (आ.क.सू.१.५.७.)। इति। तत्रेदं निदानम्। छन्दोदैवतसामान्तयोगादिति न्यायेन ज्योतिष्टोमिकस्य स्वारस्य साकमश्वस्य स्थाने स्वारमेव सैन्धुक्षितं युक्तमिति॥ १७॥

अथैडं सैन्धुक्षितमुपादत्ते—

## अच्छानप्त्वो २ ३ ४ हाइ॥ १८॥

(Numerals २, ३ and ५ are printed above अच्छानप्त्वो.)

---

1. B[1]. पवमानेऽस्य for पवमानस्य; HO. समाध्यंदिने for माध्यंदिने; B[2]AS[2]. after °दिने add:—आर्भवे च.

2. M. ऐडं सैन्धुक्षितेति for सैन्धुक्षितमैडमेव; B[1]. om. ऐडम्; S[1]S[2]. अर्थः। तदुक्तम् for अर्थादुक्तम्; M. om. यथा.

4. MHB[1-2]. प्रष्ठ° for पृष्ठ°; H. अष्टव्यालम्बे for पृष्ठावलम्बे; B[2]A. trans. कल्पः after पञ्चमस्याह्नः.

5. B[1]. अवस्थायाम् for व्यवस्थायाम्; M. जाड, HO. आजाम्य° for अजाम्य°; HO. °संचारो for °संचारौ.

8. S[1]B[1]S[2]. after स्वारं adds: ऐडं.

10. M. °प्लाविके; B[2]. °प्लवके for प्लविके; MAB[2]S[2]. वसिष्ठस्य प्रियम् for वीङ्कम्.

12. HO. योगानीत्युक्तेन for योगादिति.

**तिस्रो वाच उदीरते** (ग्रा. १२. १. ४७१.) इत्यादिषु स्तोभान्तः चतुरक्षरः प्रस्तावः । **सोमसामगायत्रीक्रौञ्चं** (पु. सू. १०.११.७.) इत्यादि-वचनात् **स्तोभः पुरस्तादन्तर्वा प्रस्तोतुरन्ते च** (पु. सू. १०.१०.२.) इति वचनाच्च स्तोभान्तो न्याय्यः प्रतिहारः ॥ १८ ॥

## इहवद्वामदेव्यम् । अग्निर्नोवᳶसता २इ ॥ १९ ॥ 5

**अग्निस्तिग्मेन शोचिषा** (ग्रा. १. ३. २२. १-३) इत्येषामन्त्यम् **इहवद्वामदेव्यम्** । तस्य वामदेव ऋषिः । पाद इहान्तः प्रस्तावः । उपात्तः प्रतिहारः । इहेत्यन्तर्निधने । **इहाकार इडाथकारौ गीतं च निधनस्वरं च हीषीस्वरं च त्र्यक्षरं देवताश्वारण्येगेयेषु तान्यन्तः सामनिधनानि** (ला. श्रौ. सू. ७. ८. ५.) इति वचनात् । प्रथमस्य त्विहाकारस्य **वाक् चेत् स्तोभान्त** इत्याद्युक्तलक्षणविरहात् न निधनत्वम् ॥ १९ ॥ 10

## यामे समूढरूपिणि तयोन्र्याय्यौ ॥ २० ॥

इहवतो वामदेव्यादनन्तरे **अग्ने मृड महाँ असि** (१.३.२३.१-२) इत्येते **यामे** कल्पकारेण **अथातस्समूढस्य रूपेण व्यूढ** इत्युक्ते समूढरूपिण्येव द्वादशाहे विनियुज्येते । **चतुर्थस्याह्नो यामं माध्यंदिनान्त्यं स्यादिति ह स्माह** 15

---

1. MAB². before तिस्रः add :—अस्य ; HO. om. तिस्रो ...प्रस्तोतु and resumes with रन्ते च (L.3).

4. HO. after च adds : अविधाद्यः

6. M. एतेषाम् for एषाम्.

8. HB²AS¹S². इहकारः for इहाकारः.

9. AB². om. हीषीस्वरं च.

10. B²HB¹OS¹S². इहकारस्य for इहाकारस्य.

11. AMB¹B². om. °आदि° ; M. अभावात् for विरहात् ; HO. अनिधनत्वम् for न निधनत्वम्.

13. B¹. अनन्तरम्, S²S¹. अनन्तरात् for अनन्तरे.

14. HO. अन्तःसमूहस्य for अतः समूढस्य ; M. °रूपाणि for रूपिणि.

15. M. वा for यामं ; AB¹B². om. यामं ; S¹. वामं for यामं ; MB²B¹. om. ह स्माह ; AS¹S². om. स्माह.

**शाण्डिल्यः । अग्नेमृडमहाँ असि** (ग्रा. १. ३. २३. १-२.) **इत्येतयोः पूर्वं वोत्तरं वा** (क्षु.सू. ३.११.५.) इति। अन्यत्र त्वनादेशे **ग्रो अयासी**दित्येषामन्त्यं स्वारमेव यामं ग्राह्यमिति वक्ष्यति । अनयोश्चौत्सिर्गिकः प्रस्तावः । प्रतिहारश्च । पदानुस्वाराणां साम्नामनुस्वारमात्रं निधनम् ॥ २० ॥

## काशीतम् । शंयोरभि ॥ २१ ॥

5 **शं नो देवीः** (ग्रा. १.३.३२.१-२) इत्यनयोराद्यं **काशीतं** काशीतेन दृष्टमिति। तस्य पर्व प्रस्तावः । न्याय्यः प्रतिहारः । ऊपास्थाने हीषीस्वरं स्वरिति निधनम् । ऊपास्थानेष्वन्यानि निधनानि । **स्वरानादेशे तथा स्वराणि स्युरित्यारभ्य स्वः काशीत** इति सूत्रवचनात् ॥ २१ ॥

10 अथ द्वे काशीते स्तः । इदं च स्वर्निधनम् । **वात आवातु** (ग्रा. ५. ७. १८४. १.) इति प्रतीचीनेडं च । तयोर्विनियोगनियममाह —

## तदभिप्लवस्वरसाम्नोः ॥ २२ ॥

अभिप्लवस्य प्रथमषष्ठयोरह्नोः प्रथमे च स्वरसाम्नि उष्णिहि सुज्ञानकाशीते विकल्पेन विधीयेते । तत्र स्वर्निधनेन सुज्ञानेन सह स्वर्निधनस्यैव काशीतस्य

15 विकल्पो युक्तो न तु प्रतीचीनेडस्येति भावः । अर्थात् संदंशवज्रादिषु **पवस्वेन्द्र-**

---

2. H. चोत्तरं for वोत्तरं वा.

3. HO. औत्सिर्गिकाः प्रस्तावप्रतिहाराः for औत्सिर्गिकः प्रस्तावः । प्रतिहारश्च ।

7. M. om. न्याय्यः प्रतिहारः ; B[1]. न्याय for न्याय्यः ; HO. उपा for ऊपा.

8. HO. उपास्थानेषु, A. उपस्थानेषु for ऊपास्थानेषु ; B[1]A. स्वराः for स्वराणि.

9. B[1]. इत्यारित्या स्वरः for इत्यारभ्य स्वः ; M. om. सूत्र.

13. S[1]S[2]. औष्णिहि for उष्णिहि.

14. B[1]. वाङ्निधनेन, HO. स्वर्निधने for स्वर्निधनेन ; HO. इव for एव.

15. OMH. °यज्ञादिषु for °वज्रादिषु.

मच्छेति काशीतौपगवेत्यादिविशेषवचनेऽपि प्रतीचीनेडमेव काशीतं ग्राह्यमिति क्रमो भवति। तथा च तत्राह निदानकारः—**तत्रैतत् काशीतं क्षीणस्वरेडं क्षयं परेषामिच्छति** (   ) इति ॥ २२ ॥

**गोराङ्गिरसस्य साम। औहो इहू इ वा २३ इ।**

**हु व ए। गोषाताय ॥ २३ ॥** 5

**कस्य नूनं परीणसि** (ग्रा. १. ३. ३४. १-२.) इत्यनयोरन्त्यम् आङ्गिरसो गौरस्तस्य ऋषिः। स्तोभादिपादः प्रस्तावः। **स्तोभः पुरस्तादन्तर्वा प्रस्तोतुरन्ते चाविधाद्यः** (पु. सू. १०. १०. २-४) ॥ **पद्योऽनादेशे** (पु. सू. १०. १०. ७.) इति वचनाभ्यामुत्तरत्र च प्रस्तावस्य विशेषानुक्ताविदं सूत्रद्वयमनुसंधातव्यम्। स्तोभादिः न्याय्यः प्रतिहारः ॥ २३ ॥ 10

**यज्ञायज्ञीयम्। दा ३२ साम् ॥ २४ ॥**

**यज्ञायज्ञा वो अग्नयः** (ग्रा. १. ४. ३५. १-४.) इत्येषामन्त्यमग्नेवैश्वानरस्य यज्ञायज्ञीयम्। तस्य प्रथमायाम् अष्टाक्षरः प्रस्तावः। उत्तरयोः द्व्यक्षरः। तथा च सूत्रम्—**प्रगाथेषु बृहद्रथन्तरयोर्यज्ञायज्ञीयस्य चानादेशे ककुभावुत्तरे तयोर्द्व्यक्षरः प्रस्तावः सर्वत्र** इति। **दा३२साम्** इति प्रतिहारः। 15 वान्तानां साम्नां वेति निधनम् ॥ २४ ॥

**नार्मेधम्। ऊर्जाम्पाता। चतासृभा।**

**इति च स्तोभान्तौ ॥ २५ ॥** 18

---

1. AB[2]. °गवे इत्याद्य for गवेत्यादि ; M. om. एव.

2. HOS[1]. उक्तम् for क्रमो भवति ; S[2]MHOS[1]. Om. आह.

9. HO. वचनार्थम् for वचनाभ्याम् ; HO. om. च ; B[1]. after प्रस्तावस्य adds :—च ; M. om. इदं.

10. HOS[1]. वचन° for सूत्र° ; M. स्तोभादिन्याय्य for स्तोभादिः न्याय्यः.

15. B[1]. उत्तरयोः for उत्तरे तयोः

**पाहि नो अग्न एकया** (ग्रा. १. ४. ३६. १-३.) इत्येषां द्वितीयं नृमेधसाङ्गिरसेन दृष्टमिति **नामैधं** द्विप्रतिहारम् ॥ २५ ॥

**भरद्वाजस्य पृश्नि । रेवात्या १ वा २३ । होवा २ हाइ ॥ २६ ॥**

**बृहद्भिरग्ने अर्चिभिः** (ग्रा. १. ४. ३७. १-२.) इत्यनयोराद्यं **भरद्वाजस्य पृश्नि** ॥ २६ ॥

**पौरुमद्गम् । दिवाः । पायौ वा ओ २ ३ ४ वा ॥ २७ ॥**

**अग्ने जरितर्विश्पतिः** (ग्रा. १.४.३९.१-२.) इत्यनयोराद्यं **पौरुमद्गम्** । **गौतमस्य पौरुमद्गे द्वे । पुरुमद्गस्य वाङ्गिरसस्य** (आ. ब्रा. १. ५. ६.) इति ॥ २७ ॥

**माण्डवम् । अद्यादा २ ३ इवाम् ॥ २८ ॥**

**अग्ने विवस्वदुषसः** (१. ४. ४०. १-२.) इत्यनयोरन्त्यं **माण्डवम्** । **मण्डोर्जामदग्न्यस्य सामनी द्वे माण्डवे वा** (आ. ब्रा. १. ५. ७.) इति । निधनवतां साम्नामन्त्यं पर्व निधनम् । **परीतोषिमित्यैडस्य** माण्डवस्य निधनवतोऽस्य चाजामित्वमूलेन विशेषवचनेनैव विनियोगव्यवस्था सिद्धा । तथा च दाशरात्रिके नवमेऽहनि सूत्रम्—**पृष्ठस्योत्तरयोर्दीर्घतमसोऽर्को माण्डवं चैडं सामराजेऽन्त्ये** इति । तथा छन्दोमदशाहे चतुर्थेऽहनि कल्पः—**तवाहं सोम**

---

2. AMB[1]B[2]S[1]S[2]. om. इति.

4. HO. एतयोः for अनयोः

13. HO. परीता योनिकस्यैवास्य, B[1]. परीतोयोनि—कस्यैडस्य for परीतोषिमित्यैडस्य ; B[1]. after निधनवतः adds :—अन्त्यस्य.

14. MS[1]S[2]. °योगस्य for °योग° ; HO. om. तथा च.

15. MS[1]S[2]HB[1]B[2]. प्रष्ठस्य for पृष्ठस्य ; H. वा for च ; B[1]. °राजो for °राजे.

16. M. अन्ये for अन्त्ये.

रारणेत्याष्टादंष्ट्रं चार्कपुष्पं च बार्हदुक्थं च माण्डवं च विदावस्विति यस्य निधनम् ( ) इति ॥ २८ ॥

गौतमम् । आविवासा ३४ । हाहो ३ ॥ २९ ॥

त्वमित्सप्रथा असि (ग्रा. १. ४. ४२. १-२.) इत्यनयोराद्यं गोतमेन दृष्टं गौतमम् । अत्र बार्हतानुष्टुभयोर्गौतमयोरनुच्छन्दसं विनियोगः । यथा दाशरात्रिके तृतीयेऽहनि बृहत्यां बार्हतस्य प्रथमेऽहन्यानुष्टुभस्येति ॥ २९ ॥ 5

दैर्घश्रवसम् । मघो ३९ नया । प्रस्तो ३४ माया ३ इति च ॥ ३० ॥

यो विश्वादयते वसु (ग्रा. २. ४. ४४. १-४.) इत्येषां तृतीयं दैर्घश्रवसं द्विप्रतिहारम् । तस्य दीर्घश्रवा राजन्य ऋषिः । त्वे सोमे दैर्घश्रवसे 10 प्रस्तावे पाठविकल्पः । वृदोहा ओ हा३ए इत्येकः पाठः । वृगोहा ओ हा ३ ए इत्यपरः पाठः । तदुक्तं विकल्पप्रकरणे फुल्लकारेण त्वे सोम दैर्घे गकार (पु. सू. ९. १. १४.) इति ॥ ३० ॥

पौरुमीढम् । अग्निः सू २३ दी ॥ ३१ ॥ 14

---

1. B[1]O. om. बार्हदुक्थं च.

4. M. after आद्यं adds :—गौतमम् ; HO. trans. गौतमं before गोतमेन.

7. MB[1]B[2]A. नंया for नंया.

8. M. द्वे for च.

10. M. after °श्रवाः adds :—वै ; B[2]A. त्वेति साम, B[1]. त्वे सोमो, M. त्वे सोम for त्वे सोमे.

11. A. प्रदोहा for वृदोहा.

14. B[1]. om. अग्निः...इत्युत्तरे (p.48 ; L.4).

**अग्निमीडिष्व** (ग्रा. २. ५. ४९. १.) इति **पौरुमीढम्** । तस्य ऋषिः पुरुमीढो वैतदश्विः । वान्तः प्रस्तावः । **कावश्रौत**—(पु.सू.१०.१०.१२.) इति वचनात् उपात्तः प्रतिहारः ॥ ३१ ॥

**मानवे यन्नमस्या २३ । यन्नामा २३ स्या ३ इत्युत्तरे ॥ ३२ ॥**

5 **नि त्वामग्ने मनुर्दधे** (ग्रा. २. ५. ५४. १-२.) इत्येते **मानवे** । तयोराद्यस्य पर्व प्रस्तावः । न्याय्यः प्रतिहारः । अस्येन्द्रक्रतुमित्यादिषु उद्गीथे निहोता विकल्पते । **मन्द्रया याति धारयेत्यत्र** तु वारा वान्ता । तदुक्तम्— **नवे निहोतातिधातुवारा** (पु. सू. ९. १. १२-१३.) इति । **अग्न आयाहि वीतये** (ग्रा. १. १. १. १-३.) इत्येतेषामन्त्ये निहोता द्रष्टव्या । वारवन्तीये

10 वारा वान्ता । उत्तरस्योभयतः स्तोभः । पादः प्रस्तावः । न्याय्यः प्रतिहारः ॥ ३२ ॥

**तदनादेशे ॥ ३३ ॥**

तद् उत्तरं मानवमनादेशे ग्राह्यम् । यथा पञ्चमेऽहनि ब्राह्मणम्— **मानवं भवत्येतेन वै मनुः प्रजापतिं भूमानमगच्छत्** (तां. ब्रा. १३. ३.

15 १४-१५.) इत्यादि ॥ ३३ ॥

---

1. S¹S². om. अग्निम्... वचनात् ; B²AM. om. ऋषिः...वैतदश्विः.
2. O. न्याय्य for कावश्रौत°.
3. S¹S². न्याय्यः for उपात्तः.
4. HM. om. मानवे...न्याय्यः प्रतिहारः (L.6.).
6. HO. उद्गीथेषु for उद्गीथे.
7. S¹S². विकल्प्यते for विकल्पते ; MAB². वारान्ता, B¹. धारवन्ता for वारा वान्ता.
8. B¹H. नवेति for नवे ; H. होता for निहोता ; B². तृधातु, H. निधातु for °तिधातु.
10. B²A. वारान्ता, S²B¹S¹. वारवन्ता for वारा वान्ता.
13. AMB¹B². उत्तरमेव for तदुत्तरम्.

किमेवं सर्वत्र नेत्याह—

## अन्यत्र पृष्ठ्याभिप्लवयोरभीवर्तलोकात् ॥ ३४ ॥

गवामयनस्योत्तरे वक्षसि पृष्ठ्याभिप्लवयोरभीवर्तस्थाने यन्मानवं विधीयते तद्विशेषानिर्देशेऽपि पूर्वमेव ग्राह्यम्। तत्र पृष्ठ्ये कल्पः—पौरुमीढं मानवं जनित्रं भारद्वाजं वासिष्ठं गौङ्गवं शुद्धाशुद्धीयं वैत एकर्चा आवृत्तस्य पृष्ठस्य अभीवर्तलोक इति। अभिप्लवे च इन्द्र क्रतुन्न आ भर इति पौरुमीढं मानवं जनित्रं भारद्वाजं श्यैतनौधसे। एतानि ब्रह्मसामानि आवृत्तस्याभिप्लवस्याभीवर्तलोक (आ. क. सू. २. ७. १.) इति। अत्र च असंचारो हेतुः। उक्तविषयादन्यत्र यत्रैव विशेषोक्तिस्तत्रैव पूर्वस्य ग्रहणम्। यथा नानाब्रह्मसामसु द्वितीये पञ्चाहे कल्पः—त्वामिदाह्यो नर इति मानवं यत् पृष्ठ्ये छन्दस्यं पञ्चमेऽहनीति। तृतीये च शग्ध्यूषु शचीपते इति मानवं यच्छन्दस्यं नित्यं पञ्चमेऽहनीति। अनयोः कल्पवाक्ययोः अर्थं कल्पव्याख्यान एव वक्ष्यामः ॥ ३४ ॥

## समन्तम्। यक्षा इया २३ सी ३। होवा ३ हाइ ॥ ३५ ॥

त्वमग्ने गृहपतिः (ग्रा. २. ६. १६. १-३.) इत्येषामाद्यं समन्तम्। समन्तानि त्रीणि। अग्नेरेकम्। वसिष्ठस्य वरुणस्य द्वे (आ.ब्रा.१.७.७) इति ॥ ३५ ॥

---

1. S[1]S[2]. एतत् for एवं.
2. MB[2]. प्रष्ठ्य for पृष्ठ्य.
3. S[1]S[2]. before गवाम् add : समन्तं ; MB[2]. प्रष्ठ्य for पृष्ठ्य.
5. M. om. वै ; OH. वैतशः, B[1]. रैवतशः for वैत एकार्चाः ; S[1]S[2]. एतच्च अभीवर्तस्य, B[1]. एकर्चायुक्तस्य, HO. एकर्चा अपृक्तस्य for एकर्चा आवृत्तस्य.
6. B[2]A. इतीति for इति.
7. S[1]S[2]. after सामानि add :—इति.
8. S[1]S[2]. om. च.
9. S[2]. S[1]MS[2]. संचारः for असंचारः ; होतुः for हेतुः ; OH. om. यत्र ; M. यत्रैवं for यत्रैव.

## श्यावाश्वम् । इडा ३४ स्पदाइ ॥ ३६ ॥

आ जुहोता (ग्रा. २.७.६३.१.) इति **श्यावाश्वम्** । तस्य श्यावाश्व ऋषिः । चतुरक्षरः प्रस्तावः । **इडा३४स्पदाइ** इति प्रतिहारः ॥ ३६ ॥

## सर्वं पदं न्याय्यो वा ॥ ३७ ॥

अथवा **इडस्पदे नमसा रातहव्यम्** इत्ययं सर्व एव पादः प्रतिहारः । **सापर्यता** इति वा । त्रैष्टुभानुष्टुभयोः श्यावाश्वयोरनुच्छन्दसं विनियोगः । तथा च व्यूढरूपिणि द्वादशाहे कल्पः—**चतुर्थस्याह्नः श्यावाश्वशैखण्डिने अन्त्ये स्याताम् । तदेतत् श्यावाश्वमाजुहोतेति बहिस्वारं बहिस्वारस्य स्थाने सत्रासाहीयस्य** (क्षु.सू. ३. १०. २.) इति । तथा ज्योतिष्टोमस्यार्भवे ब्राह्मणम्—**पुरोजिती वो अन्धस इति पद्या चाक्षर्या च विराजौ भवत** इत्यारभ्य **तासु श्यावाश्वम्** इत्यादि ॥ ३७ ॥

## इमं स्तोमं यज्ञसारथि ॥ ३८ ॥

अस्य कुत्स ऋषिः । **कौत्सं वा यज्ञसारथि वा** (आ. ब्रा. १.८.३) इति श्रुतेः । विभाग्यत्वात् प्रतिहारानुपादानम् । इदन्ताप्रत्ययार्थं तु साम्न उपादानम् । एवं सर्वेष्वपि विभाग्येषु द्रष्टव्यम् ॥ ३८ ॥

## वसिष्ठस्य वैराजमन्त्यं तन्मरायम् ॥ ३९ ॥

**आ जुहोता** (सा. ६३.) इत्यस्य दशतोऽन्त्यम् **अग्निं नरः** (ग्रा. २. ७. ७२. १-२.) इत्येतयोरुत्तरम् । अस्य नामधेयद्वयोपादानमुभयथा व्यवहार-दर्शनात् । तत्र अनुरूपाग्निष्टोमसाम्नि कल्पः—**चतुर्थास्याह्नो वसिष्ठस्य**

---

6. HO. अनुष्टुप्छन्दसं for अनुच्छन्दसम्.

7. MAB². स्वरूपिणि for रूपिणि ; MB¹B². अह्नो, A. अह्नोः for अह्नः.

8. OH. अन्ते for अन्त्ये.

17. OH, अस्या for अस्य ; SM, दशते for दशतो.

वैराजमग्निष्टोमसाम (क्षु.सू.३.६.१.) इति । मरायम् इति तु व्यवहारः फुल्ले दृश्यते । न तु कल्पब्राह्मणयोः । एतच्च सस्तोभपदविभाग्यम् ॥ ३९ ॥

## भरद्वाजस्य प्रासाहमन्त्यम् ॥ ४० ॥

अबोध्यग्निः (सा. ७३.) इत्यस्य दशतोऽन्त्यं सनादग्न (सा. ८०.) इत्येतत् । नन्वत्र यथा आर्षेयब्राह्मणम् — घृताचेराङ्गिरसस्य साम ॥ 5 भरद्वाजस्य प्रासाहम् । अग्नेर्वैश्वानरस्य राक्षोघ्नमत्रेर्वा ॥ (आ.ब्रा.१.९.६-८.) इति । तथा अस्य दशतोऽन्त्यम् उपान्त्यम् । अरण्योः (सा. ७९.) इत्येतत् भरद्वाजस्य प्रासाहम् इत्यवसीयते । सत्यम् । शाखान्तरे दर्शनादन्त्यमित्युक्तम् । तथा च जैमिनीयमार्षेयं भवति— घृताचेराङ्गिरसस्य सामनी द्वे । भरद्वाजस्य प्रासाहम् (जै. आ. ब्रा. १. ९. ६-७.) इति । अस्य परिसामत्वेन 10 विनियोगः । तथा च सूत्रम्— अश्वत्रिरात्रे नानावभृथान्यहानि । तेषां प्रथमस्याह्नः सनादग्न (सा.८०.) इत्यवभृथसाम (    ) इति । परिसाम्नां चैकर्त्विक्प्रयोज्यत्वात् प्रतिहारो न वक्तव्य इति सूचनार्थमिदन्ताप्रत्ययार्थं च उपादानमालमत्र क्रियते । भरद्वाजस्य प्रासाहमन्त्यम् ॥ त्वेषस्ते यामम् ॥ इत्यादीनां च नामधेयेन विनियोगः शाखान्तरे द्रष्टव्यः ॥ ४० ॥ 15

## त्वेषस्ते यामम् ॥ ४१ ॥ 16

---

1. AMB[2]. °साम for °सामेति ; AB[2]. अपूर्वो, B[1]. पूर्वे, M. पूर्वं for फुल्ले.

2. M. ननु for न तु.

4. B[1]. भारद्वाजस्य for भरद्वाजस्य.

7. AMB[1]. अन्त्योपान्त्यम्, B[1]S[1]S[2]. अन्त्य उपान्त्यम् for अन्त्यमुपान्त्यम् ;

8. S[1]S[2]HO. अधीयते for अवसीयते ; B[1]. शाखान्तर for शाखान्तरे.

HB[1]. after दर्शनात् add :—तु.

12. S[1]B[1]HMS[2]. Om. अह्नः .

अस्यापि सर्वस्वारे परिसामत्वेन विनियोगः। यथोक्तम्—धूम उदिते त्वेषस्ते धूम ऋण्वति (ग्रा. २. ९. ८३. १) इति ॥ ४१ ॥

**बृहदाग्नेयम् । वासा ३ उवा ॥ ४२ ॥**

त्वं हि क्षै (ग्रा. २.९.८४.१.) [इति] आग्नेयमग्निना दृष्टम् ॥ ४२ ॥

**यद्वाहिष्ठीयमुत्तरम् । त्वद्वा २३ जाः ॥ ४३ ॥**

अत्रोपात्तस्य प्रतिहारांशस्य सामद्वयसाधारणत्वात् संनिपाते च पूर्वमिति पूर्वस्य ग्रहणे प्राप्ते तद्व्यावृत्त्यर्थमुत्तरमित्युक्तम् । तस्याग्निः ऋषिः । अग्नेर्यद्वाहिष्ठीये द्वे (आ. ब्रा. १. १०. ६) इति । वान्तः प्रस्तावः । न्याय्यः प्रतिहारः ॥ ४३ ॥

**विशोविशीयम् । ओ । हुवाइ । शू २३४ षा ॥ ४४ ॥**

विशोविशीयस्याग्निः ऋषिः । अग्नेर्विशोविशीयम् (आ.ब्रा.१.१०.७.) इति । उपात्तः प्रतिहारः ॥ ४४ ॥

पक्षान्तरमाह—

**परो वा द्व्यक्षरः स्तोभादिः ॥ ४५ ॥**

यद्वा शूषेत्यस्मात् **परो द्व्यक्षरः स्तोभादिः** प्रतिहारः । हिम्मा । स्या ३ मा ३ (ग्रा. २. ९. ८७. १) इति ॥ ४५ ॥

---

1. AB[1]. अस्मात् for अस्य ; A. °सारे for °स्वारे ; AMB[1]. तथा for यथा.
4. S[1]S[2]AMB[1]B[2]. om. त्वं हि क्षैं ; M. after दृष्टम् adds :—अस्य स्तोभान्तः पादः प्रस्तावः.
6. H. °हाराङ्गस्य, M. °हारस्य for °हारांशस्य ; B[1]. Om. पूर्वमिति.
7. HO. om. इत्युक्तम् .
14. B[1]. om. वा.
15. HO. om. यद्वा; M. om. यद्वा ...समारोपयन्ति । तद् (p.५३.L.७.)

## आत्रेयम् । मर्तासो ३ दा ३ ॥ ४६ ॥

**बृहद्वयो हि मानवे** (ग्रा. २.९.८८. १-२.) इत्यनयोराद्यमा**त्रेयम्** । अत्रिणा दृष्टमिति । तस्य पर्व प्रस्तावः । न्याय्यः प्रतिहारः ॥ ४६ ॥

## आरूढवदाङ्गिरसम् ॥ ४७ ॥

**आरो ३ हान्** (ग्रा. ३.१०.९२.१.) इतीदं साम **आरूढवदाङ्गिरसम्** । तस्य प्रवर्ग्ये विनियोगः। तथा च सूत्रम्—**परिधर्म्यं सम्राडासन्द्यां समारोपयन्ति । तदारूढवदाङ्गिरसमित एत इति । स्वर्णिधनम्** ( ) इति ॥ ४७ ॥

## आसितयोर्न्याय्यौ ॥ ४८ ॥

आरूढवदाङ्गिरसादनन्तरे **राये अग्ने** (ग्रा. ३. १०. ९३. १-२) इत्येते आसिते । आसितेन देवलेन दृष्टे इति । तयोराद्यस्य षडक्षरः प्रस्तावः । **षट्शङ्कुबार्हतवाजजित् स्वाररोहितकुलीयासितयौक्तस्रुचानाम्** (पु.सू.१०. ११.९.) इति वचनात् द्वितीयस्य हाउकारान्तः पादः प्रस्तावः । द्यावाहोत्वेत्युभयोः

---

1. AB[2]H[1]. om. आत्रेयम् ... प्रतिहारः (L. 3).

2. S[1]S[2]. Om. बृहद् ... आत्रेयम्.

3. S[1]S[2]. अस्यात्रिः ऋषिः । पर्व for अत्रिणा दृष्टमिति । तस्य.

4. H. after आङ्गिरसम् adds :—इत एत.

5. H. om. आरोहान् ... इदं साम; B[1]. om. आरोहान् ... तस्य; O. इत एत इति for आरोहान् ... साम; S[1]S[2]. लिङ्गादित एतदुदाहरणमिति for आरोहन् ... इतीदं साम.

6. H. after तस्य adds :—अपि; H. सम्राडा संधाः, for B[1]. सम्राडासन्त्यां for सम्राडासन्द्याम्.

10. AMB[1]B[2]. आङ्गिरसानन्तरे for आङ्गिरसादनन्तरे.

11. BA. om. आसितेन; M. दैवलेन for देवलेन.

12. M. पाङ्क्त for बार्हत; B[2]. चक् for शङ्कु; OH. °स्रुवानाम् for स्रुचानाम्.

प्रतिहारः। ननु आसिते इत्येवमार्षेयमात्रं साम्न इदन्ताज्ञानार्थमुपादातव्यम्। तत्र सामान्यशास्त्रेण न्याय्यप्रतिहारत्वं सेत्स्यति। नैवम्। विभाग्यानामार्षेयमात्रमत्रोपादीयते। ततश्च आसिते इत्येतावत्युक्ते संदेहः स्यात्। किमेते विभाग्ये। अथ न्याय्यप्रतिहारे इति तत्रासंदेहार्थं **न्याय्यावि**त्युक्तम्॥ ४८॥

5 अनयोर्विनियोगनियममाह—

## उत्तरं द्विः॥ ४९॥

**उत्तरम्** आसितं **द्वि**र्विनियुज्यते। द्वयोः स्थानयोरित्यर्थः॥ ४९॥

कयोरित्यपेक्षायामाह—

## अष्टमे छन्दोमवतो दशरात्रस्य। नवमे पौण्डरीकस्य॥ ५०॥

10 **छन्दोमवतो दशरात्रस्य अष्टमे**ऽहनि कल्पः—परित्यं हर्यतं हरिम् इति गौरीवितस्य लोके आसितमेकस्यां दीर्घतमसोऽर्क एकस्याम् आकूपारमेकस्यां यत् स्वयोनि असावि सोमो अरुषो वृषा हरिरित्यैडं याममन्त्यम्। समानमितरन्नवमेनाह्ना द्वादशाहस्य (आ.क.सू.८.१०.४) इति। एतदेव चाष्टमं **पौण्डरीकस्य नवम**त्वेन निर्दिश्यते। त्रयश्छन्दोमा एवमेव समूढा (आ. क. सू. ८. ११. ८.) इति तत्र तयोरसाधारणं गौरीवितलोके 15 यदासितं तस्यैतद्विशेषकथनम्। यत्तु दाशरात्रिकस्य नवमस्याह्नोऽतिदेशेन प्राप्तं 16

1. H. प्रतिहारो। तद्वासीत for प्रतिहारः। ननु आसिते; B[1]. om. एवम्; B[2]AMS[1]. प्रज्ञानार्थम् for ज्ञानार्थम्.

2. HO. after विभाग्यानाम् adds : अपि.

3. S[1]. Om. एतावति.

4. AMB[2]B[1]. संदेहार्थम् for असंदेहार्थम्.

11. AB[2]S[1]S[2]. गौरीवित for गौरीवितस्य; H. अर्कम् for अर्कः.

14. A. अत्र यत्, B[1]. यत्र for त्रयः; B[1]M. छन्दोम for छन्दोमाः.

15. MA. समूढः for समूढाः.

16. B[1]. तमस्य तत् for तस्यैतत्; HO. om. तु,

यद्वाहिष्ठीयात् परमासितं तत् **पूर्वमतोऽन्यत्रेति** वक्ष्यमाणसूत्रेण द्वयोराद्यमेव ग्राह्यम् । ननु चाहीनद्वादशाहस्याहीनिकाः षडहश्छन्दोमाः प्रकृतिः । तथा च कल्पकारेण बृहद्रथन्तरपृष्ठो नानापृष्ठ इति तयोः षडहविचारयोराहीनिकत्वपक्षे आहीनिकषडहःप्रकृतिकत्वमुक्तम्—**बृहद्रथन्तरपृष्ठ्यः षडहस्समूढ** (क्षु. सू. २. १०. १.) इत्यादिना । आचार्येण च तयोर्द्वादशाङ्गत्वं ब्रुवता स्पष्टमेवाहीनिक- 5
षडहप्रकृतिकत्वम् अहीनद्वादशाहस्य दर्शितम् । तथा हि षडहविचारमधिकृत्यो-क्तम्—**द्वादशाङ्गभूते तु उभयमुपपद्यते । यद्याहीनिकोऽथ यदि सात्रिक** (क्षु. सू. २. १०. १-२.) इति । तस्माद् द्वादशाङ्गाः स्युः इति । ततश्च तस्य नवमेऽहनि गौरीवितलोके यदासितं तदपि उत्तरमेवेति विषयद्वयपरिगणनमयुक्तम् । अत्र ब्रूमः— नवमे पौण्डरीकस्येत्येतच्छन्दोमवद्दशरात्रसंबन्धिनां छान्दोमिकानां 10
स्वराणां यत्रातिदेशस्तस्योपलक्षणम् । तेनाहीनद्वादशाहेऽपि नवममहर्नवमे पौण्डरीकस्येत्येतेन संगृहीतम् । अथवा कल्पेऽहीनद्वादशाहस्य कण्ठोक्त्यभावात् कल्पकारविनियोगाभिप्रायविषयद्वयपरिगणनम् । अन्ये त्वाहुः—**उत्तरं द्विरिति** 13

---

2. B[1]. om. ननु ; AMB[2]S[1]. after छन्दोमाः add : च.

3. MB[2]. °प्रष्ठो नानाप्रष्ठः for पृष्ठो नानापृष्ठः ; HO. °पृष्ठे for °पृष्ठः ; S[1]OS[2]. द्वयोः for तयोः.

4. MAB[1]B[2]S[1]S[2]. अहीनषडह for आहीनिकषडहः ; HO. षडहे for षडहः ; HO. om. समूढः.

5. MS[2]. च ; A. आह्निक for आहीनिक.

6. AB[2]M. प्रकृतित्वम् for प्रकृतिकत्वम् ; H. सहीन for अहीन ; S[1]. अपि for हि ; A. अहीन for हि ; AB[2]B[1]M. °विचारान् for °विचारम्.

7. B[1]. त्रयम् for तु उभयम् ; A. अर्थः for अथ.

8. B[1]. द्वादशाङ्गस्य, H. द्वादशाङ्गः, O. द्वादशाङ्गानि for द्वादशाङ्गाः.

10. S[2]. om. इत्येतत्.

11. H, OS[1]S[2]. स्वाराणां for स्वराणां.

12. S[1]S[2]. अनेन for एतेन.

13. B[2]A. कल्पकाराः for कल्पकार ; AB[2]M. °प्रायं for °प्राय ; AMB[2]HO. om. °विषय° ; om. अन्ये ... विषयपरिगणनं.

विषयपरिगणनं कुर्वत आचार्यस्य अहीनद्वादशाहेऽपि नानास्वरत्वं नाभिमतम्। अपि तु गौरीवितस्वरत्वमेव। तथा च **यद्गौरीवितेनाहीनानीति द्वादशाहे ब्राह्मणम्** इति। तत्र वदामः। **यद् गौरीवितेनाहीनानी**ति श्रुतेरहीनद्वादशाहस्य भवतु गौरीवितस्वरत्वम्। चोदकोक्तया रीत्या नानास्वरत्वमपि न निवारणीयम्।
5 तत्र विषयद्वयपरिगणनस्य अस्मदुक्त एव समाधिरिति ॥ ५० ॥

## पूर्वमतोऽन्यत्र ॥ ५१ ॥

उक्ताद् विषयादन्यत्र **पूर्वम्** एवासितं ग्राह्यम्। यथा दशरात्रस्य नवमेऽहनि **आसितं भवति। यदेवासितस्य ब्राह्मणम्** (ता० ब्रा.१५.५.२६.) इति। यथा वा साकमेधत्रिरात्रस्य द्वितीयेऽहनि **अयं पूषा रयिर्भग इति**
10 **आसितं क्रौञ्चं भर्ग** (आ. क. सू. ४.४.५.) इति। तत्रासितयोरुक्तायां व्यवस्थायामिदं निदानम्। प्रथमातिक्रमे कारणाभावात् सर्वत्र पूर्वमेव ग्राह्यम्। गौरीवितलोकेषु संचारपरिहाराय उत्तरमिति ॥ ५१ ॥

## श्रुधिया इति श्रुध्यम् ॥ ५२ ॥

**अग्ने वाजस्य गोमतः** (ग्रा. ३. ११. ९९. १-२.) इत्यनयोराद्यं
15 **श्रुध्यम्। प्रजापतेः श्रुधीये द्वे। श्रुध्ये वा** ॥ (आ. ब्रा. १. १२. ३.)
16 इति। श्रुधिया[१२]ऽ२ इति प्रतिहारः ॥ ५२ ॥

---

1. S[1]S[2]. Ins. द्वय after विषय°.
2. O. यत् for अपि.
3. B[1]. Om. इति after ब्राह्मणम्; OS[1]. अहीनानिति, S[2]. अहीनादिति for अहीनानीति.
4. MAB[2]. चोदनोक्तया for चोदकोक्तया; B[1]. नीत्या नानात्वम् for रीत्या नानास्वरत्वम्; M. om. अपि; HAMB[2]S[1]. आदरणीयम्, B[1]. निवाद्व (र ?)णीयम् for न निवारणीयम्.
7. AMB[2]. उक्त for उक्ताद्; MAB[2]. दाशरात्रस्य for दशरात्रस्य.
9. B[1]MS[2]. °मेधे for °मेध°.
10. B[1]. आसीतक्रौञ्च for आसितं क्रौञ्चं.
12. HO. °हारयोः for °हाराय.

पक्षान्तरमाह—

अष्टाक्षरो वा ॥ ५३ ॥

उत्तमपादादावष्टाक्षरो वा प्रतिहारः। यथा **अस्मे देहि जातवेद** इति ॥ ५३ ॥

ककुप्सु नानापद्यः ॥ ५४ ॥ 5

**विश्वस्य दूतममृतम्** इत्यादिषु ककुप्सु गीयमानस्य श्रुध्यस्य **नानापद्यः** पादद्वयेऽवस्थितोऽष्टाक्षरः प्रतिहारः। तत्रोत्तमपादादौ चत्वार्यक्षराणि। उपोत्तमपादान्ते चत्वारीत्येवमष्टाक्षरः। यथा **श्वभोजसासदुद्रवदिति** ॥ ५४ ॥

षोडश बृहतीषु ॥ ५५ ॥

**एना वो अग्निम्** (सा. ४५.) इत्यादिषु श्रुध्यस्य नानापद्यानि षोडशाक्षराणि प्रतिहारः। तत्रोत्तमपादादौ चतुरक्षरः। तृतीयश्च पादो द्वादशाक्षर इत्येवं षोडशाक्षराणि ॥ ५५ ॥ 10

दश नदं वः ॥ ५६ ॥

**नदं व ओदतीनाम्** (सा. १५१२.) इत्यस्यामुष्णिहि श्रुध्यस्य दशाक्षराणि प्रतिहारः। तत्रोत्तमपादादौ त्रीणि। तृतीयश्च पादो विकर्षेण सप्ताक्षर इति ॥ ५६ ॥ 15 16

---

3. MAB[1]B[2]. धेहि for देहि.
6. HO. विश्व for विश्वस्य.
7 B[2]A. पदद्वये for पादद्वये ; S[1]. °द्वयव्यस्थितः for °द्वयेऽवस्थितः.
9. HOM. om. बृहतीषु.
10. B[1]. °पद्यादि for °पद्यानि.
11. B[1]B[2]AS[1]S[2]. चतुरक्षरम् for चतुरक्षरः ; B[1]. उपोत्तम for उत्तम.
14. H. om. अस्यां.
15. AB[1]B[2]M. om. तत्र.

## चतुरक्षरो गायत्रीषु ॥ ५७ ॥

**उपो षु जातमप्तुरम्** (सा. १३३५.) इत्यादौ **गायत्रीषु** श्रुध्यस्य उत्तमपादादौ चतुरक्षरः प्रतिहारः। अत्र ककुप्सु नानापद्य इत्यादीनामपि सर्वेषां श्रुधीयेत्यनेन सह विकल्पः ॥ ५७ ॥

5

## प्रमंहिष्ठीयम्। उपा औ ३ हो ॥ ५८ ॥

**प्रमंहिष्ठाय गायत** (ग्रा. ३. १२. १०७. १-४.) इत्येषामाद्यं प्रमंहिष्ठीयम्। **इन्द्रस्य प्रमंहिष्ठीयानि चत्वारि**। **वसिष्ठस्य वासितं वैषां तृतीयम्** (आ. ब्रा. १. १३. १.) इति। **चा २३ इषाइ** इति हीषीस्वरं नान्तर्निधनम्। **वाक् चेत् स्तोभान्त** इत्यादिसूत्रोक्तलक्षणविरहात्। उत्तरत्र च

10 हीषीस्वराणामस्माभिरनुपादानादेवानिधनत्वं सुज्ञानम् ॥ ५८ ॥

## गायत्रीसामासितम्। उपा १ २ ३ होइ। स्तुता २ ३ हो १ ॥ ५९ ॥

तेषां तृतीयमासितम्। तस्य यान्तः प्रस्तावः। **यान्तो दाशस्पत्य-भासशाम्मदगायत्र्यासितानाम्** (पु. सू. १०. १०. १६.) इति वचनात्। न्याय्यः सस्तोभः प्रतिहारः। अत्र दाशरात्रिके अष्टमेऽहनि **पवस्व देव**

15 **आयुषग्** इति गायत्रीष्वासितं विहितम्। **आसितं भवति। असितो वा एतेन वै दैवलः** (तां.ब्रा.१४.११.१८-१९.) इत्यादिना। तत्र किं **राये अग्न** (सा. ६१.) इत्यानुष्टभमासितमस्तु। अथ काकुभमिदमिति संदेहे निर्णयायोक्तं

18 **गायत्रीसामेति**। त्रिपदासु त्रैपदस्यैवासितस्य युक्तत्वादिति भावः ॥ ५९ ॥

---

2. MAB[2]. इत्यादि, B[1]. इत्यादिषु for इत्यादौ.

3. B[1]. om. अत्र ... औ ३ हो (L. 5.); HO. °पद्यादीनाम् for °पद्य इत्यादीनाम्.

10. HO. after स्वराणाम् adds :— अनिधनानाम् and S[1]. निधनानां; M. निधनत्वं for अनिधनत्वं; S[1]. सुज्ञातम् for सुज्ञानम्.

16. S[1]S[2]. om. वै.

१ २ २ ३
वाजभृत् । यास्या ३ हाइ । त्वाँसा २३ ॥ ६० ॥

प्रसो अग्न (ग्रा. ३. १२. १०८. १.) इति वाजभृत् । तस्य भरद्वाजः ऋषिः । चतुरक्षरो द्व्यक्षरो वा सस्तोभः प्रस्तावः । सोमसाम गायत्रीक्रौश्च (पु.सू. १०. ११. ७.) इत्यादिवचनात् द्वे वान्त्ययो—(पु.सू. १०. ११. ८.) रिति वचनाच्च । न्याय्यः सस्तोभः प्रतिहारः । वाजभृतः शाखान्तरे विनियोगो नूनमस्तीत्युच्यते भक्तिः । कल्पब्राह्मणसूत्रैः क्वचिदपि न कृतोऽस्य विनियोगः ॥ ६० ॥ 5

२२ १२ ऽ २ ^
सौभरम् । देवत्राह । व्यमू ३ हा३ ॥ ६१ ॥

तं गूर्धया स्वर्णरम् (ग्रा. ३. १२. १०९. १. ३.) इत्येषामाद्यं सौभरं सुभरिणा दृष्टमिति ॥ ६१ ॥ 10

१ ७
साध्यम् । आस्य याज्ञा २३ ॥ ६२ ॥

यजिष्ठं त्वा ववृमहे (ग्रा. ३. १२. ११२. १) इति साध्यं साध्येन (साधिना ?) दृष्टमिति ॥ ६२ ॥ 13

---

2. HO, om. तस्य.

3. MAB². trans. भरद्वाजः after ऋषिः.

4. B¹. अन्तयोः for अन्त्ययोः.

5. HO. वाजभृत् । शाखान्तरे विनियोगा (...) न्यूनमुच्यते for वाजभृतः ...उच्यते.

6. M. अत्र न तु क for नूनमस्ति.

10. MAB²B¹. सौभरिणा for सुभरिणा; M. after इति । adds:— तस्य वान्तः प्रस्तावः.

13. M. after इति adds:— तस्य पादः प्रस्तावः । साध्यम् आधीस्या यज्ञां । यजिष्ठं त्वा ववृमहे इति । साध्यम् सध्येन दृष्टमिति । तस्य पादः प्रस्तावः ।

## अगस्त्यस्य च राक्षोघ्नमन्त्यम् ॥ ६३ ॥

प्रमंहिष्ठीयेत्यस्य दशतोऽन्त्यं यद्वा ऊ विश्पतिः (ग्रा. ३. १२.११४.१) इत्येतत् । अस्य परिसामत्वेन विनियोगः । यथोक्तमश्वत्रिरात्रे नानावभृथान्यहानि तेषां प्रथमस्य सनादग्न (सा. ८०.) इत्यवभृथसाम । यद्वा ऊ विश्पतिरिति
5 द्वितीयस्येति ॥ ६३ ॥

इति श्रीवामनार्यसुत वरदराजविरचित दशतयीवृत्तौ
प्रतिहारसूत्रव्याख्यायां तृतीयः खण्डः ॥ ३ ॥

ॐ

---

2. AB[2]. अस्याः for अस्य.

3. HO. एतस्य for एतत् । अस्य.

4. AB[1]. after प्रथमस्य adds :—अह्नः.

---

# चतुर्थः खण्डः

## मार्गीयवे । शंयत् । हा । औ ३ होइ । गा २३४ वाइ ॥ १ ॥

**तद्वो गायसुते सचा** (ग्रा. ३. १. ११५. १-४.) इत्येषामाद्यान्त्ये **मार्गीयवे** मृगयुना दृष्टे इति । तथा च ब्राह्मणम्—**मार्गीयवं भवति । देवं वा एतं मृगयुरिति वदन्ति** (तां. ब्रा. १४. ९. ११-१२.) इत्यादि । तयोः प्रथमस्य वान्तः प्रस्तावः । न्याय्यः सस्तोभः प्रतिहारः । **ए ३ । किने २३४५** इति निधनम् ॥ १ ॥

## तदनादेशे ॥ २ ॥

तत् प्रथममेव मार्गीयवम् **अनादेशे** ग्राह्यम् । प्राथम्यादेवेति भावः । यथा दाशरात्रिके अष्टमेऽहनि दर्शितं ब्राह्मणम् । यथा वा त्रैककुभे सप्तमेऽहनि कल्पः । **अध्वर्यो अद्रिभिः सुतम् इति गायत्रं च मार्गीयवं चैडं च सौपर्णं रोहितकुलीयं च** (आ. क. सू. ८. ६-१.) इति । द्वितीयस्य तु यत्रैवादेशस्तत्रैव ग्रहणम् । यथा छन्दोमदशाहस्य चतुर्थेऽहनि कल्पः—**परि-प्रिया दिवः कविः** (सा. ९१५.) **इति गायत्रं चौर्णायवं च बृहच्च भारद्वाजं मार्गीयवं च यदीनिधनम्** ( ) इति । तत् प्रतिहार-ग्रहणेनोपादत्ते ॥ २ ॥

---

3. M. एतेषाम् for एषाम्.

10. $S^1S^2$MHO. अष्टमे for सप्तमे.

13. $B^2$. अतिदेशः for आदेशः ; $S^2$. दशरात्रस्य for छन्दोमदशाहस्य ; $B^1$MH. om. कल्पः.

16. $B^1$. उपात्ते for उपादत्ते.

शंयद्वा २३ वे ॥ ३ ॥

उपरितनस्तु स्तोभ उद्गातुरिति प्रागेवोक्तम् ॥ ३ ॥

आश्वम् । तेननूना २३ म्मा ॥ ४ ॥

**यस्ते नूनं शतक्रतो** (ग्रा. ३. १. ११६. १.) इत्येतत् आश्वम्
अश्वभूतेन प्रजापतिना दृष्टमिति । तथा च ब्राह्मणम्—**आश्वं भवति । अश्वो**
5 **वै भूत्वा प्रजापतिः प्रजा असृजत** (तां. ब्रा. ११. १. ४-५.) ॥ इति ।
गायत्रबार्हतयोरनुच्छन्दसं विनियोगः ॥ ४ ॥

ऐटतम् । महीया २३४ ज्ञा । उभाका २३४ र्णा इति च ॥ ५ ॥

**गाव उपवदावटे** (ग्रा. ३.१.११७.१-२.) इत्यनयोराद्यम् ऐटतम् ।
10 इटन्वान् काव्यः तस्य ऋषिः । **गावः । एगावाः ।** इति प्रस्तावः ।
**अभ्यस्तो व्यक्षरः । आनूपैटतसौहविषवैष्णवोत्तरपयोन्तस्वराणा** —(पु.सू.
१०. ११-२.) मिति वचनात् । उपान्तौ द्वौ प्रतिहारौ । हीषीस्वराणि त्रीणि
13 निधनानि ॥ ५ ॥

---

4. B[1]. om. एतत्.

8. H. वा for च.

9. M. after ऐटतं adds:—ऐटतं भवति । इटन्वान् एतेन काव्य इति ब्राह्मणम्.

10. AB[2]. इटः काप्यः for इटन्वान् काव्यः ; B[1]. काप्यः for काव्यः ; M. om. इटन्वान् काव्यः.

11. A. अभ्यस्तो द्व्यक्षरम्, M. अभ्यस्तो द्व्यक्षर°, B[1]. अभ्यस्त द्व्यक्षर° for अभ्यस्तो द्व्यक्षरः ; B[1]. °स्वाराणाम् for °स्वराणाम्.

12. H. om. त्रीणि.

## दावसुनिधने न्याय्यः ॥ ६ ॥

**तमिन्द्रं वाजयामसि** (ग्रा. ३. १. ११९. १-४) इत्येषां चतुर्णां द्वितीयं दावसुनिधनम्। लिङ्गात्। **तन्वस्य पार्थस्य सामनी द्वे। दावसोर्वाङ्गिरसस्योत्तरम्** (आ. ब्रा. २. १. ६) इति। **सवार्षा १ वा २३** इति स्तोभान्तः तस्य प्रतिहारः। **ए ३। दावसू २३४५** इति निधनम् ॥ ६ ॥ 5

## इडानां संक्षारे च स्तोभादिः ॥ ७ ॥

चकारात् न्याय्य इत्यनुकृष्यते। तेषामन्त्यम् **इडानां संक्षारं** लिङ्गादेव। इडाः संक्षरन्ति संहृत्योच्चरन्ति अस्मिंस्त्विडत्वादिति। श्रुतिश्च भवति—**वसिष्ठस्य निवेष्ट्यौ द्वौ। इडानां वा संक्षार उत्तरम्** (आ. ब्रा. २. १. ६.) इति। **स्तोभादिः** न्याय्यः प्रतिहारः ॥ ७ ॥ 10

## गौषूक्तम्। स्तोतामेगोसखौ २। हुवाइ। हुवाये ॥ ८ ॥

**यदिन्द्राहं यथा त्वम्** (ग्रा. ३. १. १२२. १-२.) इत्यनयोराद्यं गौषूक्तं गोषूक्तिना दृष्टम् ॥ ८ ॥

## आश्वसूक्तम्। आ २ इ। स्तोता २ माइगो २ ॥ ९ ॥

तयोर्द्वितीयम् **आश्वसूक्तम्**। आश्वसूक्तिना दृष्टम् इति। तस्य स्तोभादिश्चतुरक्षरः प्रस्तावः। अग्निन्दूतास्वरत्वात्। उपात्तः प्रतिहारः ॥ ९ ॥ 15

## गारम्। आनाभा ३ यीन् ॥ १० ॥

**इदं वसो सुतमन्धः** (ग्रा. ३. १. १२३. १-३.) इत्येषामन्त्यं गरेण दृष्टं **गारम्** ॥ १० ॥ 19

---

3. H. om. लिङ्गात्.

7. B²AS¹S². संक्षारः for संक्षारम्; HO. om. एव.

13. M. om. गौषूक्तिना दृष्टम्; B¹⁻²AS¹⁻². गौषूक्तिना for गोषूक्तिना; AB²B¹. गौषूक्तिना दृष्टं गौषूक्तम् for गौषूक्तं गोषूक्तिना दृष्टम्.

15. HO. स्तोभसहितः for स्तोभादिः.

**सौपर्णानामैडं साप्तमिकं स्वारं नावमिकं निधनवदाष्टमिकम् ॥ ११ ॥**

गारादनन्तरम् **उद्धेदभिश्रुतामघम्** (ग्रा. ३. २. १२५. १-३) इत्यादीनि त्रीणि सौपर्णानि । सुपर्णेन दृष्टानि इति । तेषां दशरात्रे सप्तमनवमयोः **सौपर्णं भवती**—(तां.ब्रा.१४.२.९.) त्यविशेषश्रुतेर्विनियोगव्यवस्थां दर्शयितुमुक्तं **सौपार्णानामैडं साप्तमिक**मित्यादि । अत्र चाजाम्यसंचारौ मूलमिति प्रागेवावोचाम । गर्गत्रिरात्रादौ तु **स्वारं सौपर्णं भवती**त्यादि विशेषश्रुतेरेव सिद्धा व्यवस्था । यथा त्रिककुप्दशरात्रे त्वष्टमेऽहनि **त्वं ह्यङ्ग दैव्य पवस्व देव वीतये** (सा. ९१८.) इति **सौपर्णं वैश्वमनसं** च (आ. क. सू. ८.७.५.) ति । वैदन्वतेभ्यः परं यद्यपि अविशेषेण सौपर्णं विहितं तथाप्यजामितया प्राकृतसामान्तयोगात् स्वारमेवेति सिद्धम् ॥ ११ ॥

**आद्ये न्याय्यो द्व्यक्षरौ परयोः ॥ १२ ॥**

तेषामाद्यस्य वान्तः प्रस्तावः । **न्याय्यः** प्रतिहारः । **परयोः** सौपर्णयोः **आंस्ता ३ उवा ३** इति द्व्यक्षरौ प्रतिहारौ ॥ १२ ॥

**शाकलम् । सार्वाऽ २ म् ॥ १३ ॥**

---

3. HO. अनन्तराणि for अनन्तरम्.

4. HB²AO. आदि for आदीनि ; B¹. om. आदीनि ; H. om. इति ; M. om. तेषां ; B¹. दाशरात्रयोः for दशरात्रे.

6. S¹AMB¹B²S². om. सौपर्णानाम् ; O. तत्र for अत्र; B². om. च ; HO. °संचारो for °संचारौ.

7. HO. उक्तम् for अवोचाम ; S¹S². om. भवति.

8. S¹S²B¹AM. om. व्यवस्था.

10. M. उत्तरं for परं ; MAB². प्रकृत for प्राकृत.

11. S¹. after योगात् adds : वा.

12. MB¹. न्याय्यौ for न्याय्यो.

**यदद्य कच्च वृत्रहन्** (ग्रा. ३. २. १२६. १.) इत्येतत् **शाकलं** शक्लेन दृष्टम् ॥ १३ ॥

**उष्णिक्षु रोहितकुलीयम्। वा २३ र्षी। वार्षी २ ष्ठामू २३ इत्युत्तरे ॥ १४ ॥**

**एन्द्र सानसिम्** (ग्रा. ४. २. १२९. १-२.) इत्येते रोहितकुलीये। **इन्द्रस्य रोहितकुलीये द्वे। विश्वामित्रस्य वा ॥** (आ. ब्रा. २. २. ५) इति। तयोराद्यस्य चतुरक्षरः प्रस्तावः। **वा २३ र्षी** इति प्रतिहारः। तदुष्णिक्षु विनियुज्यते। यथा दशमेऽहनि **इन्द्रमच्छा** (सा. ६९४.) इत्येतासु **रोहितकुलीयं भवति। यदेव रोहितकुलीयस्य ब्राह्मणम्।** (तां. ब्रा. १५. ११. ६.) इति प्राकृतस्य निधनवतः पौष्कलस्य स्थाने निधनवत एव रोहितकुलीयस्य युक्तत्वादिति भावः। अन्यत्र द्वितीयमेव। यथा सप्तमेऽहनि **वृषा पवस्व** (सा. ८०३) इत्येतासु **रोहितकुलीयं भवति। एतेन वै विश्वामित्र** (तां. ब्रा. १४. २. ११-२२.) इत्यादि। तत्राजाम्यादिकं मूलमनुसंधातव्यम्। तस्य षडक्षरः प्रस्तावः। **षट्शङ्कुबार्हत** (पु. सू. १०. ११. ९.) इत्यादि-वचनात्। न्याय्यः प्रतिहारः ॥ १४ ॥

**अदारसृत्। विद्धा २ इतूवा २ ॥ १५ ॥**

**वयमिन्द्र** (ग्रा. ४. २. १३२. १-५.) इत्येषां द्वितीयं भरद्वाजस्या-**दारसृत्**। तस्य पर्व प्रस्तावः। न्याय्यः प्रतिहारः ॥ १५ ॥

**ऐध्मवाहमनादेशे। येषामिन्द्रो युवा इहा ॥ १६ ॥**

1. MB[1]B[2]A. trans शाकलं after दृष्टं.
10. H. प्रकृतस्य for प्राकृतस्य ; H. om. रोहितकुलीयस्य ... इत्येतासु.
11. B[1]. अयुक्तत्वात् for युक्तत्वात्.
12. H. भवात्याजिजित्याया एवेन for भवति। एतेन.
13. HO. जाम्यादिकं, M. अजाम्यर्थकं for अजाम्यादिकं.

अघाय (ग्रा. ४.२.१३३.१-३) इत्येषामाद्ये द्वे ऐध्मवाहे इध्मवाहेन दृष्टे इति। तयोराद्यमनादेशे ग्राह्यम्। यथा दशमेऽहन्युक्थेषु ऐध्मवाहं भवति (तां. ब्रा. १५. ६.२) इति। यजिष्ठं त्वा ववृमह इत्यत्र तृतीयपादादेरभ्यासः इहायां प्लवत इति विकल्पप्रदर्शनार्थः। तथा च अथ विकल्पाः (पु.सू.९.१.१)
5 इत्यधिकृत्य फुल्लकारेणोक्तं यजिवाह इहायां प्लवते (पु.सू. ९. १. १७) इति। उत्तरं तु यत्रैवादिश्यते तत्रैव ग्राह्यम्। यथा आभिप्लविके षष्ठेऽहनि परिस्वानो गिरिष्ठा इति गायत्रं चैध्मवाहं च यदिवहत् (आ. क. सू. १. ७. ५) इति। तस्य स्तोभान्तः चतुरक्षरः प्रस्तावः ॥ १६ ॥

यथा परिस्वानायां प्रतिहारमाह—

10 येषाम्। आइन्द्रा ओ २३४ वा इत्युत्तरे ॥ १७ ॥

इहकार इडाकारौ गीतं च निधनानि ॥ १७ ॥

## समस्य मरुतां संवेशीयम् ॥ १८ ॥

समस्य मन्यवे विश (ग्रा. ४. ३. १३७. १) इत्येतन्मरुतां संवेशीयम्। अस्य परिसामत्वेन विनियोगः। तथा चावभृथसामाधिकारे सूत्रम्—
15 इष्टाहोत्रीयमभिषेचनीये समस्येति वा (          ) इति ॥ १८ ॥

---

1. S[1]S[2]. om. द्वे.

3. A. तृतीयः for तृतीय.

4. M. इहायमप्यवत इति, B[1]. इहायां प्ल इति, HO. विभागायां प्लुत for इहायां प्लवत इति ; B[2]. प्रदर्शनार्थम् for प्रदर्शनार्थः ; HO. अत्र for अथ.

5. A. यच्छिवाह, for यजिवाह.

6. B[1]S[1]S[2]. अतिदिश्यते for आदिश्यते.

8. OH. अस्य हान्तः for तस्य स्तोभान्तः.

11. HOS[1]S[2]. इहकाराश्चत्वारो, AB[2]. इहकारा अनुस्वारो, B[1]. इहकारश्चाथकारो, for इहकारइडाकारौ गीतं च.

14. HAB[1], सवेशीयं for संवेशीयम्.

हाविष्मतहाविष्कृतयोर्न्याय्यौ ॥ १९ ॥

**देवानामिदवो महत्** (ग्रा. ४. ३. १३८. १-४) इत्येषां द्वितीय-तृतीये हविष्मता हविष्कृता च दृष्टे यथाक्रमं हाविष्मतहाविष्कृते । हविष्मते २३४५ । हविष्कृते २३४५ इति निधनलिङ्गात् । अत्र ब्राह्मणम्— **हविष्मांश्च वै हविष्कृच्चाङ्गिरसावास्ताम्** (तां. ब्रा. ११. १०. १०) इति ॥ १९ ॥ 5

काक्षीवतम् । य औ होइ । औहो २३४ वा ॥ २० ॥

**सोमानं स्वरणम्** (ग्रा. ४. ३. १३९. १) इत्येतत् **काक्षीवतं** कक्षीवता औशिजेन दृष्टम् इति ॥ २० ॥

दक्षणिधनम् तन्मौक्षम् परादू २३ ष्वा ३ । 10

हौवा ३ हा ॥ २१ ॥

**अधा नो देव सवितः** (ग्रा. ४. ३. १४१. १-२) इत्यनयोराद्यं **दक्षणिधनं मौक्षमिति** चोच्यते । **भरद्वाजस्य मौक्षे द्वे । दक्षणिधनं वैनयोः पूर्वम्** (आ. ब्रा. २. ३. ७.) ॥ इति । तस्य वान्तः प्रस्तावः । स्तोभान्तो न्याय्यः प्रतिहारः । अस्योभयार्षेयोपादानमुभयथा व्यवहारदर्शनात् । तत्र 15 ब्राह्मणम्— **दक्षणिधनं भवति । प्रजापतिः प्रजा असृजत** (तां. ब्रा. १४. ५. १३) इत्यादि । कल्पश्च— **यस्ते मदो वरेण्य इति गायत्रमौक्षे** (अ.क.सू.१.३.५) इति ॥ २१ ॥ 18

---

3. OB². om. हविष्मते २३४५ । हविष्कृते २३४५.

13. H. वा for च ; S¹. after निधनं adds :—तत् ; S². वा for च.

14. M. तस्य for अस्य.

15. B¹. उदूहे यथा for उभयथा.

औपगवे द्वे सौश्रवसे । इन्दो रा २३ इन्द्राः ।
यवाशा २३ इराः इति न्याय्यो वा ॥ २२ ॥

अपादुशि प्रियंघस (ग्रा. ४. ४. १४५. १-२.) इत्येते उपगुना सौश्रवसेन दृष्टे औपगवे इत्युच्येते । सौश्रवसे इति च । तयोराद्यस्य पर्व प्रस्तावः । न्याय्यः प्रतिहारः । द्वितीयस्य यवाशा २३ इराः इति प्रतिहारः । इन्दौ २ । हौ २ । हुवा २१ इ । आ ३४ इन्द्रो इति वा । अस्य न्याय्यप्रतिहारत्वपक्षे यवाशा २३ इरा इत्यस्य नास्त्युदूहः । उपद्रवत्वादिति । प्रकृत्यैवोपादानम् उदूहोपादाने हि नित्य उदूह इति शङ्क्येत । अनयोर्निधनविकारं वक्ष्यति— औपगवयोरथामथावा ॥ कामन्तु नाना अभिचरणीयेषु वामथायथान्यत्र (प्र. सू. १५. २५-२७) इति ॥ २२ ॥

पूर्वमुष्णिक्षु ॥ २३ ॥

तयोः पूर्वमुष्णिक्षु विनियुज्यते । यथा श्येने कल्पः—पवस्वेन्द्रमच्छेति सफौपगवे (आ. क. सू. ३. ७. ४) इति । उत्तरमन्यत्र । यथा सप्तमेऽहनि त्वन्न इन्द्रेति ककुभोऽधिकृत्य ब्राह्मणम्—सौश्रवसं भवति । उपगुर्वै सौश्रवस (तां. ब्रा. १४. ६. ७-८) इत्यादि । यथा वा प्रथमे स्वरसाम्नि कल्पः—औशनमौपगवं वसिष्ठस्य प्रियं तैरश्च्यं वेत्युक्थानि (आ. क. सू. २. २. ७) इति ॥ २३ ॥

---

1. AB[1]M. ते for द्वे.
2. MB[2]A. यावाशा for यवाशा.
3. HO. उपगुना दृष्टे सौश्रवसेन वा दृष्टे for उपगुना...दृष्टे.
4. AB[2]. वा for च.
5. S[1]. after द्वितीयस्य adds :—तु ; MAB[2]. यावाशा for यवाशा.
6. HO. om. अस्य.
8. MB[2]AS[1]. उदूह्यो° for उदूहो° ; S[2]. शङ्क्यते for शङ्क्येत.
9. B[1]. चाकामन्तु for वा ॥ कामन्तु.
12. B[1]. श्येन° for श्येने.
13. B[1]. उत्तमम्, S[2]. इतरम् for उत्तरम्.
14. S[1]. after ककुभः adds :—इति.

## इष्टाहोत्रीयम् ॥ २४ ॥

**इष्टा होत्रा असृक्षत** (ग्रा. ४. ४. १५१. १.) इत्येतत् । तस्यर्षयोऽप्सरसः । प्रवर्ग्योद्वासने विनियोगः ॥ २४ ॥

## निधनकामम् । इँवा २३४ । हाहोइ ॥ २५ ॥

**अहमिद्धि पितुः परि** (ग्रा. ४. ४. १५२. १.) इत्येतत् प्रजापते-र्निधनकामम् । तस्य **पवस्व दक्ष साधन** इत्यत्नोपद्रवे त्नयः पाठविकल्पाः । तदुक्तं विकल्पाधिकारे— **मदमदो धनकामे**(पु.सू.९.१.३) इति ॥ २५ ॥

## वाजदावर्यः । क्षू २३ मा ॥ २६ ॥

**रेवतीर्नः सधमादे** (ग्रा. ४. ४. १५३. १.) इत्येतत् **वाजदावर्यः** प्राजापत्याः । एकस्यैव साम्नः आपो दारा इतिवल्लिङ्गवचने । तासां पर्व प्रस्तावः । **क्षू २३ मा** इति प्रतिहारः ॥ २६ ॥

## वैतहव्यम् । तदोकोनिधनम् । शा ३ ताक्रा ३ तूम् । षडक्षरो वा ॥ २७ ॥

**पान्तमावो अन्धसः** (ग्रा. ४. ५. १५५. १-३.) इत्येषामन्त्यं **वैतहव्यं** वीतहव्येन श्रावसेन दृष्टमिति । **तदोकोनिधन**मिति चोच्यते । अन्वर्थत्वात् । तत्न ब्राह्मणम्—**पान्तमावो अन्धस इति वैतहव्यम्** इत्युपक्रम्य **यदोकोनिधनं रात्रेर्मुखे भवति । ओकसोऽप्राच्यावायेति** । तस्य **शा ३ ताक्रा ३ तूम्** इति प्रतिहारः । **म॰ हिष्ठश्र्वर्ष । णाइ** इति वा ॥ २७ ॥

## गौरीवितम् । तच्छाक्त्यम् । दा ३ नाम् । या ३ ता ॥ २८ ॥

---

2. $B^1$. om. असृक्षत ..पितुः (L. 5) ; O. अस्य for तस्य.

15. $B^2$MA. वीतहवेन for वीतहव्येन ; $S^1$. om. च.

19. $MB^1B^2$A. शाक्यम् for शक्त्यम्.

प्र व इन्द्राय मादनम् (ग्रा. ४. ५. १५६. १-७.) इत्येषामाद्यं गौरीवितिना शाकृत्येन दृष्टं गौरीवितमित्युच्यते। शाकृत्यमिति च। तत्र ब्राह्मणम्— प्रव इन्द्राय मादनमिति गौरीवित — (तां.ब्रा.९.२.२) मिति। सूत्रं च—शाकृत्यसाम मैधातिथं वारवन्तीयमुत्तरम् इत्यादि। शाकृत्यमिति
5 तु व्यवहारः फुल्ले दृश्यते। तस्य पर्वद्वयं प्रस्तावः। उपाचौ द्वौ प्रतिहारौ॥ २८॥

काण्वम्। का २३४ ण्वाः॥ २९॥

वयमु त्वा तदिदर्थाः (ग्रा. ४. ५. १५७. १-२.) इत्यनयोर्द्वितीयं काण्वम्। तस्य ऋषिः काण्वः। ऐहिहा २ इ इति स्तोभः उद्गीथाङ्गम्। उद्गातुस्तु काण्वऋषभपावमानजनित्राणाम् (पु. सू. १०. १०. ५.) इति
10 वचनात्। रन्ता ३ या २३४५ इति निधनम्॥ २९॥

श्रौतकक्षम्। आर्कमर्चा ३। हा ३ हा॥ ३०॥

इन्द्राय मद्वने (ग्रा. ४. ५. १५८. १-३.) इत्येषां तृतीयं श्रुतकक्षेण दृष्टमिति। तस्य वान्तः प्रस्तावः। न्याय्यः स्तोभान्तः प्रतिहारः॥ ३०॥

दैवोदासं रात्रिषाम। ऐहो२ इमास्या॥ ३१॥

15 अयं त इन्द्र सोमः (ग्रा. ४. ५. १५९. १-३) इत्येषामन्त्यं
16 दिवोदासार्षम्। तस्य पादद्वयं प्रस्तावः। द्विपात्संजयनानदगौशृङ्ग-

---

1. O. om. प्र वः... ब्राह्मणम्.
2. AMB[1]B[2]. शाक्येन for शाकृत्येन.
5. S[1].S[2]. om. द्वौ.
8. M. उद्गीथारम्भः for उद्गीथाङ्गम्.
12. MB[2]. श्रौतकक्षेण for श्रुतकक्षेण.
13. MB[2]AO. om. इति ; OH. om. न्याय्यः...पादद्वयं प्रस्तावः (L.16).
14. M. om. रात्रिषाम.
16. S[2]. पद° for पाद° ; HO. द्विपात् for द्विवर्वा.

**रात्रिर्दैवोदासानाम्** (पु.सू.१०.१०.११) इति वचनात् । न्याय्यः प्रतिहारः । अस्य च मध्यमे रात्रिपर्याये होतृषामत्वेन विनियोगः । तथा च ब्राह्मणम्— **अयं त इन्द्र सोमः इति दैवोदासम्** (तां.ब्रा.९.२.८) इत्यादि । न ततोऽन्यत्र । तेनाभिषेचनीये **पवस्वेन्द्रमच्छेति** सफदैवोदासे इत्युष्णिक्षु विधीयमानं दैवोदासं **यस्यत्यच्छम्बरंमद**मित्यस्यामुत्पन्नमौष्णिहमेवेति सिद्धम् ॥ ३१ ॥ 5

## शाक्वरवर्णम् । साद्यस्क्रेषु जुहूमा २३ सी ॥ ३२ ॥

**सुरूपकृत्नुमूतये** (ग्रा. ४. ५. १६०. १-४) इत्येषामाद्यं **शाक्वरवर्णम्** । तस्य ऋषिः शाक्वरवर्णः । सुरू इति प्रस्तावः । जारास्वरत्वात् । न्याय्यः प्रतिहारः । पूर्वोपायाः स्थाने तथा स्वरेडानिधनम् । अन्त्याया अध्यर्धोपायाः स्थाने इट् । इडेत्यर्धेडा । तस्याश्चाङ्गोवैरूपादिषु रहस्येषु सिद्धः स्वरः । 10 **रहस्यवदध्यर्धे** (प्र. सू. १५. ४) इति वक्ष्यमाणत्वात् । तच्च साद्यस्क्रेष्वेव विनियुज्यते । आदित्याश्चाङ्गिरसश्चेत्यादिभिः पञ्चभिरनुवाकैरथैषश्येन इति अनेन विधीयमानाः षट् साद्यस्क्राः एकत्रिकान्ताः षट् साद्यस्क्रा इति शौचिवृक्षिर्निकायित्वादिति सूत्रवचनात् । तत्र प्रथमे साद्यस्क्रे कल्पः—**उच्चाते जातमन्धस इति गायत्रमेकस्याम् आमहीयवमेकस्यां शाक्वरवर्णमेकस्याम्** (आ.क.सू. 15

---

2. HO. om. च.

9. S¹S²HO. पूर्वस्या दण्डोपायाः स्थाने, MB¹. पूर्वोपायस्थाने for पूर्वोपायाः स्थाने.

10. M. °पायः स्थाने for °पायाः स्थाने ; इत् for इट् ; M. तस्याम् for तस्याश्च ; B¹. °स्वरम् for °स्वरः.

11. S¹B²S². एतच्च for तच्च ; HO. Om. तत्.

12. O. om. अनेन.

13. AB². °वक्षन्निकायित्वात्, M. °वृक्षिन्निकार्यत्वात्, S¹S². वृक्षिर्निकाय्यत्वात् for °वृक्षिर्निकायित्वात्.

14. MAB¹B²S¹S². तस्य for तत्र ; H. Om. साद्यस्क्रे कल्पः ... उत्तरयोरपि.

15. M, Om. आमहीयवमेकस्यां.

३.५. ३.) इति। तस्यैवोत्तरयोरपि साद्यस्क्रयोरतिदेशः श्येने च **अर्षासोमद्युमत्तम** इति **गायत्रमेकस्यामामहीयत्रमेकस्यां शाक्करवर्णमेकस्याम्** (आ.क.सू. ३. ७. ३.) इति। यथाभिप्लविके पञ्चमेऽहनि **अर्षा सोम द्युमत्तम** इति **गायत्रं च यण्वं चापत्यसंतनिशाक्करवर्णान्युत्तरेष्वभिप्लवेषु** (आ. का. सू. १. ६. ३.) इति विधीयते। तद्राहस्यमेव शाक्करवर्णं संतनिगुणयुक्तस्य यण्वस्य स्थाने तथाविधस्यैव शाक्वरवर्णस्य युक्तत्वादिति भावः ॥ ३२ ॥

## औदलम्। सुदुघामा इति न्याय्यो वा ॥ ३३ ॥

(superscript numerals ४ ५ २ over सुदुघामा)

तेषामन्त्यमुद्दलेन वैश्वामित्रेण दृष्टमौदलम्। तस्य चतुरक्षरः प्रस्तावः। उपात्तयोरन्यतरः प्रतिहारः ॥ ३३ ॥

## आर्षभम्। त्रा २३० पा ३ ॥ ३४ ॥

**अभि त्वा वृषभ** (ग्रा. ५. ५. १६१. १-३.) इत्येषामन्त्यमृषभेण **दृष्टमार्षभम्**। तस्य वान्तः प्रस्तावः। **त्रा २३० पा ३** इति प्रतिहारः ॥ ३४ ॥

## कौत्से परे। तयोर्न्याय्यावैडमनादेशे ॥ ३५ ॥

आर्षभात् **परे य इन्द्र चमसेष्वा** (ग्रा. ५. ५. १६२. १-२) इत्येते **कौत्से**। क्रमवशादेव सिद्धे परग्रहणं स्पष्टार्थम्। तयोः पूर्वस्य **पाइवे ३ द्धाइ**।

---

1. O. तत्र for तस्य ; M. om. तस्यैवोत्तरयोरपि ... एकस्यामिति

3. S[1]. यदा, S[2]. यत्तु for यथा ; B[1]. °प्लाविके for °प्लविके.

4. B[1]. अपर for अपत्य ; O. अपत्यं संतनि शाक्वरवर्णं तानि for अपत्य... शाक्वरवर्णानि ; S[1]S[2]. अपि for इति.

5. B[1]. Om. विधीयते ; M. om. तद्राहस्यमेव, HO. तत्राहसम् for तद्राहस्यम् ; H. सन्तत, AB[2]S[1]S[2]. सन्तान for सन्तनि.

8. M. औदलेन for उदलेन.

9. B[1]. चतुरक्षरस्य for चतुरक्षरः ; M. अन्यतमः for अन्यतरः ; S[2]. न्याय्यः for अन्यतरः

15. B[1]HO. विस्पष्टार्थम् for स्पष्टार्थम्.

आस्या ३ हाइ इति प्रतिहारः । आ २ इ । पिबेदस्यो २३४ हाइ इत्युत्तरस्य । सप्तानां तु पुरस्तात् प्रतिहारस्य (प.सू.१.७) इति वचनात् । तयोरैडं कौत्स-मनादेशे ग्राह्यम् । प्राथम्यादजामित्वाच्च । यथाष्टमेऽहनि ब्राह्मणम् — गौरीवितं भवति । यदेव गौरीवितस्य ब्राह्मणम् ॥ कौत्सं भवति । एतेन वै कुत्सोऽन्धसो विपाप्मानमपश्यत् (तां. ब्रा. १४. ११. २५-२७) इति । 5
स्वारस्य तु कौत्सस्य यत्रैवातिदेशस्तत्रैव ग्रहणम् । यथा छन्दोमवद्दशरात्रस्य सप्तमेऽहनि कौत्सं स्वारमिति ॥ ३५ ॥

सौमेधम् । सखाय आ ॥ ३६ ॥

योगे योगे तवस्तरम् (ग्रा. ५. ५. १६३. १-३) इत्येषामन्त्यं सुमेधसा दृष्टं सौमेधम् ॥ ३६ ॥ 10

दैवातिथम् । हयाइ । सखायस्तोम । वा । औ ३ हो ॥ ३७ ॥

आ त्वेता निषीदत (ग्रा. ५.५.१६४.१-२) इति देवातिथिना दृष्टं दैवातिथम् ॥ ३७ ॥

क्रौञ्चं षष्ठे गायत्रीसाम । पिबातुवास्या २३ । ग । वाहाइ ॥ ३८ ॥

इदं ह्यन्वोजसा (ग्रा. ५. ६. १६५. १-३) इत्येषां द्वितीयं क्रौञ्चं 15
क्रुचा दृष्टम् इति । तच्च षष्ठेऽहनि इन्द्रायेन्दाविति गायत्रीषु विधीयते । क्रौञ्चं भवति । क्रुङ्ङेष्यमहरविन्दत् (तां. ब्रा. १३. ९. १०-११) इति । अत्र 17

---

2. H. इत्यादि for इति.
3. H. Om. अष्टमे.
5. HB[1]S[1]S[2]. विपानम् for विपाप्मानम्.
6. HS[1]S[2]O. आदेशः. for अतिदेशः.
7. M. कौत्सस्वरः, OHB[1]. कौत्सं स्वरः for कौत्सं स्वारम्.
12. AM. दैवातिथिना for देवातिथिना.
13. HB[1]MO. Om. दैवातिथम्.
16. AB[1]B[2]. क्रुञ्चा, M. क्रौञ्चेन for क्रुचा.
17. O. क्रुतः द्याम् for क्रुङ्ङेष्यम्.

षष्ठ इत्येतदन्यत्र गायत्रीषु क्रौञ्चस्य विनियोगाभावाल्लब्धम्। गायत्रीसामेत्येतच्चा-नुच्छन्दसं विनियोग इत्युक्तत्वात्। अत एव **सोमाः पवन्ते अभी नो वाजसातमम्** (सा.५४८-९) इत्यानुष्टुभे क्रौञ्चे षष्ठेऽहनि अनुष्टुप्स्वेव विनियुज्यते इति भावः। अस्य स्तोभान्तश्चतुरक्षरः प्रस्तावः। उपात्तः प्रतिहारः **इन्द्रोयेन्दो** (सा. ४७२) इत्यत्र द्वितीयपादस्याभ्यासेन स्वरविकल्पः प्रदर्श्यते। यथोक्तं **क्रौध्येपाषष्ठं नवमात्रम्** (पु. सू. ९. १. ७.) इति। क्रौञ्चे मध्यमपादे षष्ठमक्षरमेकमात्रं नवमात्रं वेति विकल्पः इत्यर्थः। नवमात्रं स्वरत्रययोगात्। अस्मादेव वचनात् ज्ञायते अनेकस्वरस्य वृद्धस्य अक्षरस्यैकैकस्मिन् स्वरे तिस्रो मात्रा इति॥ ३८॥

**धृतश्चुन्निधनं माधुच्छन्दसम् पीबातुवौ। हो वा ३ हा॥ ३९॥**

तेषां तृतीयं **माधुच्छन्दसं** मधुच्छन्दसा दृष्टम्। अस्य **त्वामिदाह्यो नर** (ग्रा. ८.७.३०२.१.) इत्यस्मान्माधुच्छन्दसाद्व्यावृत्त्यर्थम्। धृतश्चुन्निधन-मित्यन्वर्थं विशेषणम्॥ ३९॥

**आकूपारं रात्रिषाम। ऐहोइ। महाहस्तीदक्षा २३ हो इ॥ ४०॥**

**आ तू न इन्द्र क्षुमन्तम्** (ग्रा. ५. ६. १६७. १-४.) इत्येषां तृतीयम् **आकूपारम्** आकूपारेण दृष्टम् इति। तच्च रात्रिषामत्वेन विनियुज्यते। तथा च

---

1. AB². लब्ध for लब्धम्.

6. MH. क्रौध्यया षष्ठं, AB. क्रौञ्चमध्ययाषष्ठं, B¹. क्रौपाषष्ठं for क्रौध्येपाषष्ठं; MAB². क्रौञ्च° for क्रौञ्चे.

8. MS². तत्र, HAB². त्रिक for अनेक; OMAB¹B²H. एकस्मिन् for एकैकस्मिन्.

11. S¹S². एषां for तेषां; S¹S². तस्य for अस्य.

12. HAB². अन्वर्थं° for अन्वर्थम्.

16. B²A. अकूपारेण for आकूपारेण.

ब्राह्मणम्—**आ तू न इन्द्र क्षुमन्तम्** इत्याकूपारम्। **आकूपाराङ्गिरसस्यासीत्** (तां.ब्रा.९.२.१३-१४) इत्यादि। रात्रेरन्यत्र तु **आकूपारमनादेशे। उभयाहा** (प्र. हा. सू. ६. १९.) इति वक्ष्यति ॥ ४० ॥

**गौरीवितम्। सूनुः सत्या ३१२३ ॥ ४१ ॥**

**अभिप्रगोपतिं गिरा** (ग्रा. ५. ६. १६८. १-३.) इत्येषां तृतीयं **गौरीवितम्।** गौरीवितिना शाकृत्येन दृष्टमिति। तस्य यस्तृतीयपादाभ्यासश्चतुर्थपादस्थानीयः तत्र चतुरक्षरमाद्यं प्रतिहारः। उत्तमं पादं प्रतिहारस्थानमित्युक्तत्वात्। **इन्द्रं जुषस्वेत्यत्र चाकानश्चा ५३१२३** इति प्रतिहारः। रात्रौ शाकृत्यसंज्ञं गौरीवितम्। ततोऽन्यत्रेदमेवेति व्यवस्था ॥ ४१ ॥

**वामदेव्यम्। छ्यौहो ३। हुंमा॒ऽ२ न्याय्यो वा ॥ ४२ ॥** 10

**कया नश्चित्र आ भुवत्** (ग्रा. ५. ६. १६९. १-३.) इत्येषां तृतीयं वामदेवेन दृष्टं **वामदेव्यम्।** अस्याग्निं नर इत्यत्र **पर्यूषु** इत्यत्र च उद्गीथे पाठविकल्पः। तदुक्तं **विराट् पर्यू च देव्ये गीथादिः** (पु. सू. ९. १. ११) इति। विच्छन्दःसु गीतेन प्रस्तावप्रतिहारौ। तद्यथा **अग्निं नर** इत्यत्र पर्वद्वयं प्रस्तावः। **शांगार्हपा** इति प्रतिहारः। **तिमौ होहिंमा** इति वा। एवमन्यत्रापि द्रष्टव्यम् ॥ ४२ ॥ 15

**सत्रासाहीयम्। सियौ ३ हो। वाहा ३४३ इ। न्याय्यो वा ॥ ४३ ॥** 18

---

1. AB². अकूपार° for आकूपार.
6. MB². शाक्येन, B¹. शामक्येन, A. शाक्ष्येन for शाकृत्येन.
7. B¹. om. उत्तमं; H. om. पादं.
9. B²M. शाक्य for शाकृत्य.
10. MB²AS¹S². हिंमा for हुंमा.
11. M. after तृतीयं adds: वामदेव्यम्।.
13. B²MB¹. पर्यूंषु च, S¹AS². पर्यूषु for पर्यू च.
14. S¹S².AHO. द्रष्टव्यौ for द्रष्टव्यम्.

त्यमु वः सत्रासाहम् (ग्रा. ५. ६. १७०. १-२.) इत्यनयोर्द्वितीयम् इन्द्रस्य सत्रासाहीयम् ॥ ४३ ॥

**त्वाष्ट्रीसाम । वन्वाना २३ साः ॥ ४४ ॥**

**ईङ्खयन्तीः** (ग्रा. ५. ७. १७५. १.) इत्येतत् **त्वाष्ट्रीसाम** । तस्य त्वाष्ट्री ऋषिः । पर्व प्रस्तावः । न्याय्यः प्रतिहारः । अस्य गायत्रसाम्नो गायत्रीष्वेव विनियोगः । तथा च त्रिककुब्दशरात्रे कल्पः—**पवस्व दक्षसाधन इति गायत्रं च त्वाष्ट्रीसाम च यदीङ्खयन्ती-** (आ. क. सू. ८.३.३) रिति । **सुतासो मधुमत्तमः** इत्येषां त्वानुष्टुभानां त्वाष्ट्रीसाम्नामनुष्टुप्स्वेव विनियोगो दर्शयिष्यते ॥ ४४ ॥

**प्रतीचीनेडं काशीतम् । प्रण आयूꣳ षी ३ ता ॥ ४५ ॥**

**वात आ वातु भेषजम्** (ग्रा. ५. ७. १८४. १.) इत्येतत् काशीतेन दृष्टं काशीतम् । प्रतीचीनेडमित्यन्वर्थविशेषणम् । तथा च ब्राह्मणम्—**प्रतीचीनेडं काशीतं भवति । पराचीभिर्वा अन्याभिरिडाभीरेतो दधदथैतत् प्रतीचीनेडं काशीतं प्रजात्या** (तां.ब्रा.१५.५.१५-१६) इति ॥ ४५ ॥

**साकमश्वम् । वयमिन्द्रा ३ । स्मसिस्थात ३ रिति च स्तोभान्तौ ॥ ४६ ॥**

**त्वावतः पुरूवसोः** (ग्रा. ५. ८. १९३. १) इत्येतत् **साकमश्वम्** । तस्य ऋषिः साकमश्वः पर्वद्वयं प्रस्तावः । **ऐडेऽर्धं साकमश्वे** इति सूत्रवचनात् । पादस्यार्धमित्यर्थः । उपान्तौ द्वौ प्रतिहारौ ॥ ४६ ॥

---

5. AB². त्वाष्ट्रं ऋषयः, M. त्वष्टा ऋषिः, S¹S². त्वाष्ट्रचः for त्वाष्ट्री ऋषिः ; AMB¹B². गायत्रीसाम्नः for गायत्रसाम्नः.

6. MAB². after °रात्रे add: चतुर्थस्याह्नि ; MAB². विकल्पः for कल्पः.

8. S¹S². om. तु.

18. HO. before पर्वद्वयं add:— तस्य ; B¹HO. ऐडं साकमश्वम् for ऐडेऽर्धं साकमश्वे, S¹S². ऐडं for ऐडेऽर्धं.

## हरिश्रीनिधनम् । इन्द्रात्वा २३ दा ॥ ४७ ॥

**गिर्वणः पाहि नः सुतम्** (ग्रा. १. ९. १९५. १.) इति **हरिश्रीनिधनम्** । तस्य ऋषिरङ्गिराः । पर्वद्वयं प्रस्तावः । **द्वादश हरिश्रयन्त** इति वचनात् । न्याय्यः प्रतिहारः ॥ ४७ ॥

## सिन्धुषाम ॥ ४८ ॥

5

**आ त्वा विशन्त्विन्दवः** (ग्रा. ५. ९. १९७. १.) इति **सिन्धुषाम** । सिन्धव इति लिङ्गात् । तस्यर्षिः सिन्धुः । प्रवर्ग्ये विनियोगः ॥ ४८ ॥

## सौमित्रम् । वा २३ जी ॥ ४९ ॥

**इन्द्र इषे ददातु नः** (ग्रा. ५. ९. १९९. १-२.) इत्यनयोर्द्वितीयं **सौमित्रं** सुमित्रेण दृष्टमिति । अस्य गायत्रसाम्नो गायत्रीष्वेव विनियोगः । तथा 10
अष्टमेऽहनि **अध्वर्यो अद्रिभि**रित्यत्र **इन्द्राय साम गायते**त्यौष्णिहस्य सौमित्रस्य पञ्चमेऽहनि ककुप्स्थाने मध्यमोक्थ्ये विनियोगः । ककुबुष्णिहोरेकच्छन्दस्त्वात् ॥ ४९ ॥

## आमहीयवम् उक्थ्येषु । आ इवातेरा ॥ ५० ॥

**एवा ह्यसि वीरयुः** (ग्रा. ६. १२. २३२. १.) इत्या**महीयवम्** । 15
अमहीयुना दृष्टमिति । तदुक्थ्येष्वेव विनियुज्यते । यथाभिप्लवस्य द्वितीयेऽहनि 16

---

8. M. हरिश्रीनिधने, HO. हरिश्रीय, B[1]. हरिश्रीयन्त for हरिश्रयन्त.

9 S[1]S[2]H. एतयोः for अनयोः

10. H. Om. अस्य ; M. अथ for तथा ; HO. Om. तथा...विनियोगः (L-12.)

12. B[1]B[2]. मध्यमोक्ते, A. मध्यमोक्थे for मध्यमोक्थ्ये.

14. AB[2]. उक्थेषु for उक्थ्येषु.

15. B[1]. after इति adds : एतत्.

16. HMO. आमहीयुना for अमहीयुना.

**साकमश्वमभ्रातृव्यो अनात्वम् इति आमहीयवमाष्टादंष्ट्रं यदौहोव-दित्युकृथ्यानि** (आ. क. सू. १.३.७) इति। तेन **उच्चा ते जातमन्धस-** योनिकस्यैवामहीयवस्य माध्यंदिने पवमाने विनियोग इत्युक्तं भवति। यथा प्रायणीये चतुर्विंशे **वृषा पवस्व इति गायत्रं चामहीयवं** चेति। इयं च व्यवस्था

5 प्रकृतिभूतयोर्ज्योतिष्टोमद्वादशाहयोस्तथा दर्शनाल्लब्धा इति ॥ ५० ॥

इति श्रीवामनार्यसुतवरदराजविरचितायां दशतयीवृत्तौ
प्रतिहारसूत्रव्याख्यायां चतुर्थः खण्डः ॥ ४ ॥

---

1. S[1]S[2]. इत्यादि for इति.
2. B[2]A. उकृथानि for उकृथ्यानि.
3. H. om. पवमाने.
5. HO. om. लब्धा ; S[1]S[2]. Om. इति.

# पञ्चमः खण्डः

## श्यैतम् । सहस्रेणावाइवा ३ शा ॥ १ ॥

अभि प्र वः सुराधसम् (ग्रा. ६. १. २३५. १-३.) इत्येषां तृतीयं **श्यैतं** प्राजापत्यम् ॥ १ ॥

## अभीवर्तः । इन्द्रांगा १ इर्भी २ः ॥ २ ॥ 5

तं वो दस्ममृतीषहम् (ग्रा. ६. १. २३६. १-५.) इत्येषां द्वितीयम् **अभीवर्तः । प्रजायतेश्वाभीवर्त्तोऽभीवर्तस्य वाङ्गिरसस्य** (आ.ब्रा.३.१.४.) इति ॥ २ ॥

## नौधसम् । आ २ ३ इन्द्राम् ॥ ३ ॥

तेषामेवान्त्यं **नौधसं** नोधसा काक्षीवतेन दृष्टमिति ॥ ३ ॥ 10

## क्षुल्लककालेयम् । हुवे हो इ भा २ ३ राम् ॥ ४ ॥

**तरोभिर्वो विदद्वसुम्** (ग्रा. ६. १. २३७. १-७) इत्येषां चतुर्थं **क्षुल्लककालेयम्** । तस्य ऋषिः कलिः । **गायन्तस्सुतसोमे** अध्वरे इत्यन्त-र्निधनम् । निगदवर्तित्वात् । तथा च वागादीनुपायान् प्रकृत्य सूत्रम्—**तेभ्यो यन्निगदवृत्त्यनन्तरमार्चिकं तेन सहोपेयुरनादेशः** (  ) इति । **पुरोजिती वो अन्धसः** (सा.५४५) इत्यत्र **श्वानं श्नथिष्टन** इत्यन्तर्निधनम् ॥ ४ ॥ 15 16

---

6. A. एषु for एषां ; HO. द्विवतीयः for द्विवतीयम्.

7. S[1]S[2]. after अभीवर्तः adds :—इन्द्रायेन्दवित्यत्र द्विवतीयपादस्याभ्यासेन स्वरविकल्पः

कालेयम् । हुवाइ भरौ । वा ३४३ ओ ३४ वा ॥ ५ ॥

तेषामन्त्यं कालेयं कलिना दृष्टमिति ॥ ५ ॥

गौश्रृङ्गम् । नेमिंतष्टेवसोवा ३ ओ २३४ वा ॥ ६ ॥

तरणिरित्सिषासति (ग्रा. ६.१.२३८.४) इत्येषामन्त्यं गौश्रृङ्गम् । तस्यर्षिः गौशृङ्गः । पञ्च पर्वाणि प्रस्तावः । द्विपात्संयनानद (पु.सू.१०.१०.११) इत्यादिवचनात् । उपात्तः प्रतिहारः ॥ ६ ॥

पृष्ठम् । अस्मा२ आ २३ वा ॥ ७ ॥

पिबा सुतस्य रसिनः (ग्रा. ६. १. २३९. १-३.) इत्येषामाद्यं पृष्ठं प्राजापत्यं ॥ ७ ॥

जमदग्नेरभीवर्तः । अस्मा२ अवा २३ । हा ॥ ८ ॥

तेषामन्त्यं जमदग्नेरभीवर्तः । तस्य हाउकारान्तः प्रस्तावः । हाउकारान्तः सन्तनिजमदग्न्यभीवर्तकार्तयशाकारान्तत्वाष्ट्रीसाम्नाम् (पु. सू. १०.१०.१९) इति वचनात् । न्याय्यः प्रतिहारः ॥ ८ ॥

कौल्मलबर्हिषम् । ऐहोइ । गा २ विष्टयाइ ॥ ९ ॥

त्वं ह्येहिचेरवे (ग्रा. ६. १. २४०. १-२.) इत्यनयोराद्यम् । तस्य ऋषिः कुल्मलबर्हिः । उपात्तः प्रतिहारः ॥ ९ ॥

षडक्षरो वा स्तोभान्तः ॥ १० ॥

---

2. S[1]S[2]HO. तस्य कलिर्द्रष्टा for कलिना दृष्टमिति ; AB[1]B[2]. after कालेयं adds :—तस्यर्षिः कलिः.

5. B[1]A. om. पञ्च ; B[1]. पर्षं च for पञ्च ; HO. पर्वं° for पर्वाणि.

उदिन्द्राश्वमोवा ३ ओ २३४ वा इति ॥ १० ॥

जनित्रे । वाइश्वे ३ होइ । पिबा ३ हो ।
वाइश्वेपिबन्तुकौ ३ । हो ३१ ये ३ ॥ ११ ॥

**न हि वश्चरमं च न** (ग्रा. ६. १. २४१. १-२.) इत्येते वसिष्ठस्य **जनित्रे** । तयोराद्यस्य पादः प्रस्तावः । ततः परस्तु स्तोभ उद्गातुः । **उद्गातुस्तु काण्व ऋषभपावमान जनित्राणाम्** (पु. सू. १०. १०. ५.) इति वचनात् । न्याय्यः सस्तोभः प्रतिहारः ॥ उत्तरस्य पर्वत्रयं प्रस्तावः । **एकादशोत्तरे जनित्रे** (पु. सू. १०. ११. ११) इति वचनात् । अत्रापि ततः परः स्तोभ उद्गातुरेव । षडक्षरः स्तोभान्तः प्रतिहारः । **अगति स्तोभस्य स्वरे प्रत्यये संधौ** (पु. सू. ५. ५. २) इति वचनात् । अनुपूर्वमित्यकारे परे संहितायां होइकारस्यागतिः ॥ ११ ॥

अनुपूर्वमौपशदनवसप्तदशयोः पूर्वमतोऽन्यत्र ॥ १२ ॥

औपशदे कल्पः—**नौधसस्यर्क्षुजनित्रम् । परिप्रधन्वेति सफम् । पर्यूष्विति श्यावाश्वम् । पुरोजिती वो अन्धस इति आन्धीगवं जनित्रं च** (आ. क. ५. १. ३) इति । **नवसप्तदशे च अभिषोमास आयव इति जनित्रं रौरवयौधाजये नौधसस्यर्क्षु जनित्रम्** (आ. क. ६. १. ४) इति । तयोः

1. B[1]A. इदिन्द्र° for उदिन्द्र°.

5. H. after उद्गातुः adds :—षडक्षरस्तोभान्तः प्रतिहारः.

6. B[2]M. ऋषभः for ऋषभ ; B[2]. पवमान for पावमान.

7. S[2]. पर्वद्वयं for पर्वत्रयं.

10. MAB[2]S[2]. पूर्वमेकारे for अनुपूर्वमित्यकारे ;

11. S[1]S[2]. न गतिः for अगतिः.

12. O. औपषद, S[2]. औपदश for औपशद.

13. O. औपनिषदे, S[2]. औपदेशे for औपशदे ; MB[1]. om. ऋक्षु ; AMB[1]B[2]S[1]S[2]. om. परिप्रधन्वेति...जनित्रमिति (L. 15.)

जनित्रद्वयमनुपूर्वं प्रयुज्यते । स्थानतो व्यवस्था तयोः उक्तत्वात् । अन्यत्र तु तयोः पूर्वमेव प्राथम्यात् । यथा संवत्सरे कल्पः—**पौरुमीढं मानवं जनित्रम्** (आ. क. २. ७. १) इत्यादि ॥ १२ ॥

**मैधातिथम् । शइषाउवा । ण्याताउवा ।**

**साचाउवा । सूताउवा इति च ॥ १३ ॥**

5 **मा चिदन्यत्** (ग्रा. ६. १. २४१. १.) इति **मैधातिथम्** । तस्य ऋषिर्मेधातिथिः काण्वः । चतुरक्षरः स्तोभान्तः प्रस्तावः । द्वौ प्रतिहारौ ॥ १३ ॥

**वैखानसम् । तस्योत्तमः पादः ॥ १४ ॥**

**नकिष्टं कर्मणानशत्** (ग्रा. ६. २. २४३. १-२.) इत्यनयोराद्यं

10 **वैखानसम्** । तस्य वैखानसा ऋषयः । उत्तमः पादोऽनभ्यासः प्रतिहारः । **वैखानसं पौरुहन्मनमुद्वंशीयमाष्कारणिधनं त्वाष्ट्रीसाम । तेषामुत्तमं पदं प्रागभ्यासात्** ( ) इति सूत्रवचनात् । **अभिप्रियाणीत्यत्र रथं विष्वञ्च मरुहदिति** प्रतिहारः ॥ १४ ॥

**भारद्वाजम् । वहा ० तू १ सो २३ ॥ १५ ॥**

15 **आ त्वा सहस्रमाशतम्** (ग्रा. ६. २. २४५. १-४.) इत्येषामाद्यं **भारद्वाजम्** । तस्य पर्व प्रस्तावः । न्याय्यः प्रतिहारः ॥ १५ ॥

**कण्वबृहत्तस्यैष एव स्तोभान्तः ॥ १६ ॥**

तेषामेव द्वितीयं **कण्वबृहत्** । तस्यर्षिः कण्वः । पर्व प्रस्तावः ।

19 **वाहा ० तू १ सो २३४** । इत्येष एव **हाहो** इति स्तोभान्तः प्रतिहारः ।

---

1. MB[1]B[2]S[1]S[2]. व्यवस्थायाः, A. अव्यवस्थायाः for व्यवस्था तयोः; HO. om. तु ; MS[1-2]B[1-2]. द्वयोः for तयोः.
2. M. om. पूर्वमेव...उत्तरयोः (p.83. L.3).
5. S[1]S[2]O. सुत for सूता उवा.
11. HO. om. पदं ; MB[1]. पादं for पदं.

त्वं ह्येहि चेरवे इत्यत्र उदा आ इन्द्रा हाहो इति पाठविकल्पः। तदुक्तं कण्वबृहति उदा आ इति गतिः (पु.सू.९.१. २०) इति। पुनानस्सोमधारयेत्यत्र उत्तरयोर्बृहतीकारः ककुबुत्तरकार इति पक्षद्वयम्। तच्चोक्तं त्वन्नो वारे पुनाण्वबृहति (पु. सू. ९. १. २२) इत्यादि ॥ १६ ॥

गौङ्गवम्। आइन्द्रब्र। वा। औ इ हो ॥ १७ ॥ 5

त्वमङ्ग प्रशंसिषः (ग्रा. ६. २. २४७. १) इत्येतत् गौङ्गवम्। तस्यर्षिरग्निर्गुङ्गुर्वा। पुनानस्सोमधारयेत्यादौ सर्वत्र पाठविकल्पप्रदर्शनार्थस्तृतीयपादाभ्यासः। उक्तं हि—गवतृतीयदशमं क्रुष्टं सर्वत्र (पु.सू.९.१.९) इति। गौङ्गवस्य तृतीये पादे सप्तममष्टमं चाक्षरं क्रुष्टं वैकल्पिकमित्यर्थः ॥ १७ ॥

इन्द्रस्य यशः। अनू २ हो १ ॥ १८ ॥ 10

त्वमिन्द्रयशा (ग्रा. ६.२.२४८.१-३) इत्येषामाद्यम् इन्द्रस्य यशः। तस्य चतुरक्षरः प्रस्तावः। यथोत्तरयोः। आद्यायास्तु न्यूनाक्षरत्वात् त्र्यक्षरः। अनू २ हो १ इति प्रतिहारः। उत्तरयोः प्रस्तावे स्वरविकल्पः। तदुक्तम्—यशस्युत्तरयोरग्निदूतास्ताव (पु. सू. ९. १. १९) इति ॥ १८ ॥

साध्रम्। आनाओ २३४ वा। ताश्वा ओ २३४ वा ॥ १९ ॥ 15

तेषां द्वितीयं साध्रम्। तस्य ऋषिः साध्रः। इन्द्रो वा हीषीस्वरमन्तर्निधनं तृतीयश्च पादः ॥ १९ ॥ 17

---

7. B[1]. गौङ्गविः, HO. गौङ्गवः for गुङ्गुः and om. वा; O. प्रदर्शनार्थं for प्रदर्शनार्थः.

8. S[2]. साष्टमं कृष्टमसर्वत्र for दशमं कृष्टं सर्वत्र.

9. B[1]B[2]A. तृतीय° for तृतीये; HO. om. पादे; S[1]. दशमम् for सप्तममष्टमं च; B[1]. [अ]न्त्याक्षरं for चाक्षरं; HO. om. कृष्टं; B[2]AS[2]. अकृष्टं for कृष्टं

12. B[1]. om. चतुरक्षरः प्रस्तावः; H. तथा for यथा; B[1]. आद्यस्तु for आद्यायास्तु.

यौक्तस्रुचम् । आइन्द्रा २ म् ॥ २० ॥

इन्द्रमिद्देवतातयः (ग्रा. ७. २. २४९. १) इत्येतत् युक्तस्रुचा दृष्टं यौक्तस्रुचम् । तस्य षडक्षरः प्रस्तावः । षट्च्छङ्कु बार्हत (पु.सू.१०.११.९) इत्यादिवचनात् । आइन्द्रा २ म् इत्युत्तमपादे द्व्यक्षरः प्रतिहारः ॥ २० ॥

5 गौतमस्य मनाद्यम् । कण्वे २ षुसू २३ ॥ २१ ॥

यथा गौरो अपाकृतम् (ग्रा. ७. २. २५२. १-२) इत्यनयोराद्यं गौतमस्य मनाद्यम् ॥ २१ ॥

हारायणम् । वा इ दा २ म् । षडक्षरो वा स्तोभान्तः ॥ २२ ॥

10 शग्ध्यूषु शचीपते (ग्रा. ७. ३. २५३. १-३.) इत्येषां द्वितीयं हारायणम् । तस्य इन्द्र ऋषिः । वा इ दा २ म् इति प्रतिहारः अनुशूरचरो वा ३ ओ २३४ वा इति वा ॥ २२ ॥

वरुणसाम । स्तोत्वं राजसुगायत । स्तो २३ त्राम् ॥ २३ ॥

15 प्रमित्राय प्रार्यम्णे (ग्रा. ७. ३. २५५. १-३) इत्येषामन्त्यं
16 वरुणसाम । तस्य वरुण ऋषिः । उपात्तः प्रतिहारः ॥ २३ ॥

---

2. M. om. युक्तस्रुचा दृष्टं.

5. S[1]S[2]. मनाज्यं for मनाद्यं.

6 H. एतयोः for अनयोः.

7. AS[1]S[2]B[2]HO. om. गौतमस्य मनाद्यम्.

10. S[1]S[2]. अन्त्यं for द्वितीयं.

## द्व्यक्षरो वाभ्यासादिः ॥ २४ ॥

**स्तो[1] २ ३ त्राम्[2]** इत्येतावान् वा प्रतिहारः इत्यर्थः। अस्य बार्हतस्य वरुणसाम्नो बृहतीष्वेव विनियोगः। यथा षष्ठेऽहनि **मृज्यमानः** इत्यत्र। जागतस्य तु घृतवतीत्यत्र जगतीष्वेव। यथा व्यूढरूपिणि कल्पः—**वात्रेतुरं च वरुणसाम च षष्ठस्यान्ते स्याताम्** (क्षु. सू. ३. १०. ५) ॥ २४ ॥ 5

## वषट्कारणिधनम् ॥ २५ ॥

वरुणसाम्नोऽनन्तरम् **अभि त्वा पूर्वपीतये** (ग्रा. ७. ३. २५६. १) इत्येतत् **वषट्कारणिधनं** विभाग्यम्। तस्य ऋषिः प्रजापतिः। अभ्यस्तः प्रथमः पादः प्रस्तावः। **पादोऽभ्यस्तो वषडन्ताभ्यस्ताकूपारराजनपयसाम्** (पु.सू. १०. ११. ४) इति वचनात्। तृतीयः साभ्यासस्तोभान्तः पादः प्रतिहारः। 10 ऊपास्थाने तथा स्वरं वषडिति निधनम्। तथा च छन्ननिधनाधिकारे वक्ष्यति **अभित्वा पूर्वेति वषट्कारः** (प्र. हा. सू. १५. ६) इति ॥ २५ ॥

## सन्त्वा संशानानि ॥ २६ ॥

**सन्त्वा** शब्दादीनि चत्वारि सामानि **संशानानि। संश्रवसो विश्रवसः सत्यश्रवसः श्रवस इति वाय्यानां चत्वारि सामानि। इन्द्रस्य वा** 15 **संशानानि** (आ. त्रा. ३.३.६.) ॥ इति श्रुतेः। एषां सर्वस्वारे परिसामत्वेन 16

---

4. HO. अस्य जगतीमेव यथा व्यूढरूपिणी द्वादशाहे for अत्र जगतीष्वेव। यथा व्यूढरूपिणि कल्पः; $AB^1B^2$. व्यूढे for व्यूढरूपिणि कल्पः.

8. $B^1$. om. अभ्यस्तः प्रथमः पादः प्रस्तावः; HO. पादोऽभ्यस्तः प्रस्तावः। तथोक्तम् for अभ्यस्तः ... प्रस्तावः; $S^1S^2$. before अभ्यस्तः adds:—तस्य.

9. $S^1S^2$. after प्रस्तावः adds:—तदुक्तम्.

10. $S^2HS^1$. om. वचनात्; $MAB^2B^1$. om. साभ्यास; $MAB^2S^1S^2$. om. पादः;

11. $B^1$. after वक्ष्यति adds:— इति.

14. $B^1B^2MA$. संश्रवसे विश्रवसे सत्यश्रवसे श्रवसे इति वार्याणाम् for संश्रवसो विश्रवसः ... वाय्यानाम्.

15. $S^1S^2$. वार्य्याणां for वाय्यानां.

विनियोगः। तथा च सूत्रम्—संस्थितेऽहनि सन्त्वाहिन्वन्तीत्यासन्धङ्गानि समापयेयुः ( ) इत्यादि। तत्र चैषां सर्वप्रयोज्यत्वात् प्रतिहारानुपादानम्। सौत्रामण्यां च यजमानं चेद्वसादिशेषेणाभिषिञ्चेयुरित्यादिकं पुष्ट्या इति। वैश्यस्येत्येके। इत्येवमन्तं सूत्रमनुसंधातव्यम्॥ २६॥

5 वासिष्ठम्। जीवाज्योर२३तीः॥ २७॥

इन्द्र क्रतुं न आभर (ग्रा. ७. ३. २५९. १-३) इत्येषां द्वितीयं वासिष्ठम्॥ २७॥

नवमतन्त्र एव॥ २८॥

तच्च नवमतन्त्र एव विनियुज्यते। यथा श्रीणन्त इत्यध्यास्यायाम्।
10 तत्र ग्रहणं यत्र नवमस्यातिदेशः। यथा छन्दोमवद्दशरात्रस्याष्टमेऽहनि। तत्राप्यस्यैव वासिष्ठस्य प्राप्त्यर्थम्। नवमतन्त्रादन्यत्र तु [वयमेनमिदा इत्यत्र] वासिष्ठम्। तदनादेश (प्र. हा. सू. ५. ४४) इति वक्ष्यति॥ २८॥

आष्कारणिधनं काण्वम्॥ २९॥

वयं घ त्वा सुतावन्तः (ग्रा. ७. ३. २६१. १-४) इत्येषामाद्यम्
15 आष्कारणिधनम्। [आष्] इति लिङ्गात्॥ २९॥

अभिनिधनं च॥ ३०॥

17 काण्वमित्यनुकृष्यते। तेषामेव तृतीयमभिनिधनं काण्वम्॥ ३०॥

---

1. M. after अङ्गानि adds : सामानि.
2. HO. विनियोज्यत्वात् for सर्वप्रयोज्यत्वात्.
3. M. वसाति for वसादि; S[1]S[2]. वसा for वसादि.
9. MB[2]A. om. तच्च नवमतन्त्र एव; H. Om. च.
11. HO. अध्यास्यैव for अप्यस्यैव; MOH. after वासिष्ठस्य adds :— एव.

## दिङ्निधनं च महावैष्टम्भम् ॥ ३१ ॥

**दिङ्निधनं** तेषामेव चतुर्थं **महावैष्टम्भम्** । अत्र तु क्रमवशादेव चतुर्थमिति सिद्धे दिङ्निधनमिति विशेषणं विस्पष्टार्थम् ॥ ३१ ॥

## तयोर्न्याय्यौ ॥ ३२ ॥

**तयो**रभिनिधनमहावैष्टम्भयो**र्न्याय्यौ** प्रतिहारौ ॥ ३२ ॥ 5

## आद्ये द्व्यक्षरः ॥ ३३ ॥

**आद्ये** आष्कारणिधने उत्तमपादादौ **द्व्यक्षरः** प्रतिहारः । तस्य आष्कारणिधनस्य कण्व ऋषिः । पादः प्रस्तावः । **पा१ २ ३ री२** इति प्रतिहारः । अभिनिधनस्य काण्वस्य स्तोभादिद्व्यक्षरः प्रस्तावः । जारास्वरत्वात् । न्याय्यः प्रतिहारः । महावैष्टम्भस्य विष्टम्भ ऋषिः । पादः प्रस्तावः । न्याय्यः प्रतिहारः ॥ ३३ ॥ 10

## द्वैगतम् । सु१ता २३ । पूर्वो वा दशाक्षरः ॥ ३४ ॥

**यच्छक्रासि** (ग्रा. ७. ४. २६४. १-२) इत्यनयोराद्यं द्विगता भार्गवेण दृष्टं **द्वैगतम्** । तस्य **सु१ता२३** इति प्रतिहारः । यद्वा ततः पूर्वो दशाक्षरः । **त्वा१२गीर्भि२र्द्युगदिन्द्राके२ १ शिभी २ः** इति ॥ ३४ ॥ 15

---

3. B[1]. om. इति ; M. स्पष्टार्थम् for विस्पष्टार्थम्.

7. O. उत्तर° for उत्तम° ; S[1]S[2]. ततः, B[2]. तत्र for तस्य ; MAB[1]. om. तस्य.

10. B[1]B[2]A. Om. प्रतिहारः ; HO. पर्वद्वयं for पादः

11. B[1]B[2]A. Om. प्रतिहारः.

15. M. after इति adds :— वा.

**श्रायन्तीयम् । प्रतिभागन्नदी २ धिमः प्रा २३ ती ॥ ३५ ॥**

श्रायन्त इव सूर्यम् (ग्रा. ७. ४. २६७. १) इत्येतत् श्रायन्तीयम् । तस्य ऋषिः प्रजापतिः । उपान्त्यो दशाक्षरः प्रतिहारः ॥ ३५ ॥

**द्व्यक्षरो वाभ्यासादिः ॥ ३६ ॥**

अथवा अभ्यासादिः प्रा २ ३ ती इति द्व्यक्षरः प्रतिहारः ॥ ३६ ॥

**चतुरक्षरो वा प्राग्घिकारात् ॥ ३७ ॥**

यद्वा श्रायन्तीयस्य हिंकारात् प्राक् चतुरक्षरः प्रतिहारः । भागान्ना३दा इति ॥ ३७ ॥

**वाम्रम् । आंइन्द्रो २ हांरी २ ॥ ३८ ॥**

न सीम देव (ग्रा. ७. ४. २६८. १) इत्येतत् वाम्रेण दृष्टं वाम्रम् । तस्य वान्तः प्रस्तावः । न्याय्यः प्रतिहारः ॥ ३८ ॥

**पूर्वो वा द्व्यक्षरः ॥ ३९ ॥**

यद्वा न्याय्यात् पूर्वो द्व्यक्षरः प्रतिहारः जता २ इ इति । दण्डोपायाः स्थाने तथा स्वरेडानिधनम् । अध्यर्धेडोपायाः स्थाने अध्यर्धेडारहस्यवत् ॥ ३९ ॥

---

3. H. Om. प्रतिहारः.

5. M. द्व्यक्षरः प्राकमिति इति वा for अथवा ... प्रतिहारः ।

7. H. Om. यद्वा ... हिंकारात्.

11. B[1]. om. प्रतिहारः.

13. H. दण्डोपायस्थाने, B[1]. दण्डो वा स्थाने, M. दण्डूपास्थाने for दण्डोपायाः स्थाने.

14. अध्यर्धोपायस्थाने, H. अध्यर्धेडायाः स्थाने for अध्यर्धेडोपायाः स्थाने.

वैयश्वम् । परामा १ ज्या २ः ॥ ४० ॥

आ नो विश्वासु हव्यम् (ग्रा. ७. ४. २६१. १-३) इत्येषां तृतीयं व्यश्वेनाङ्गिरसेन दृष्टं वैयश्वम् ॥ ४० ॥

तच्छौल्कम् ॥ ४१ ॥

तत् वैयश्वं शौल्कम् इति च व्यवह्रियते । तथा च त्रिककुब्दशरात्रस्य षष्ठेऽहनि कल्पः—परीतोषिञ्चता सुतमिति शौल्कं च यशश्चाभीशवं च प्रतोदश्च (आ. क. ८. ५. ३) इति ॥ ४१ ॥ 5

नवमतन्त्र एव ॥ ४२ ॥

यथा दशरात्रस्य नवमेऽहनि वैय्यश्वं भवति । यदेव वैय्यश्वस्य ब्राह्मण-मिति । नवमतन्त्रादन्यत्र तु उभयं शृणवच्चनेति एतद्योनिकमेव वैय्यश्वमित्युक्तं भवति । यथा संदंशवज्रयोः । पुनानस्सोमधारयेति वैय्यश्वमेकस्यां वषट्कारणिधनमेकस्यां रौरवमेकस्यां यौधाजयं तिसृषु (आ.क.५.९.२) इति । यथा वा त्रिककुब्दशरात्रादेः सप्तमेऽहनि रथन्तरं च वामदेव्यं च वाशं च वैयश्वं च (आ. क. ८. ६. ४) इति । ननु शौल्कं नवमतन्त्र एवेत्य-प्रयोजकमिदम् । इदानीमेव हि त्रिककुभे षष्ठेऽहनि शौल्कस्य विनियोगो दर्शितः । 10 15

---

5. B¹HS¹S². Om. तत् ... व्यवह्रियते ; M. trans. तथा च ... प्रतोदश्चेति । after नवमेऽहनि (L. 9) and after प्रतोदश्चेति adds again:— तन्नवमतन्त्र एव ।

6. S¹S². यद्वा for यशश्च.

9. M. दाशरात्रिके for दशरात्रस्य.

10. HOM. om. तु.

12. HO. om. रौरवमेकस्याम् ; HOS¹⁻². after यौधाजयं ins. एकं.

13. MAB¹B². Om. वा.

14. B². येवेत्यत्र, S². एवेत्यत्र, A. एवेति, S¹M. एव for एवेत्य° ; B¹. om. एवेत्य°.

नैष दोषः । त्रिककुभि षष्ठनवमतन्त्रयोर्व्यत्यासात् । तथा चात्र निदानम्—
अथैते षष्ठनवमयोस्तन्त्रे व्यत्यस्यतीत्यादि । अत एव चात्र तन्त्रग्रहणम् ।
अन्यथा नवम इत्येतावदेव वक्तव्यं स्यात् ॥ ४२ ॥

## वासिष्ठम् । आनूना २३४० भू ॥ ४३ ॥

वयमेनमिदाह्यः (ग्रा. ७. ४. २७२. १-३) इत्येषामन्त्यं वासिष्ठम् ।
5 तस्य हु वे हो २ इ इत्यादिरुद्गीथः । हुवादिर्वासिष्ठ (पु.सू. १०.१०.६)
इति वचनात् । न्याय्यः प्रतिहारः ॥ ४३ ॥

## तदनादेशे ॥ ४४ ॥

इहवद्वासिष्ठमित्यादि विशेषोक्त्यभावे तदेव ग्राह्यम् । यथा संवत्सरे
10 पौरुमीढं मानवं जनित्रं भारद्वाजं वासिष्ठं गौङ्गवम् (आ. क. २. ७. १)
इत्यादि ॥ ४४ ॥

## पौरुहन्मनम् । तस्योत्तमः पादः ॥ ४५ ॥

वासिष्ठानन्तरं यो राजा चर्षणीनाम् (ग्रा. ७. ४. २७३. १-२)
इत्यनयोराद्यं पौरुहन्मनम् । तस्य पुरुहन्मा वैखानस ऋषिः । उत्तमः पादः
15 प्रागभ्यासात् प्रतिहारः ॥ ४५ ॥

## आनूपम् । तद्वाध्र्यश्वम् । चन्द्राइर्या २ ती ३ ॥ ४६ ॥

आर्षेयद्वयोपादनमुभयथा व्यवहारदर्शनात् । तथा च पञ्चमेऽहनि
ब्राह्मणम्—आनूपं भवति । एतेन वै वाध्र्यूश्व आनूपः (तां. ब्रा. १३. ३.
19 १६-१७) इत्यादि । अभिषेचनीये कल्पश्च—पुरोजिती वो अन्धस इति

1. H. नैव for नैष ; HO. तत्र for अत्र.
2. B[1]. आदिः for आदि ; HO. om. च.
6. M. उद्गीथम् for उद्गीथः.
14. HO. एतयोः for अनयोः.
16. AB[1]B[2]M. वाध्रायश्वम् for वाध्र्यश्वम्.

वाध्र्यूश्वं च वैतहव्यं च (आ. क. ४. ८. ७) इति। एतच्च अश्वी रथी (ग्रा. ७. ५. २७७. १-२) इत्यनयोराद्यम्। अस्य अभ्यस्तो द्व्यक्षरः प्रस्तावः। न्याय्यः प्रतिहारः॥ ४६॥

नैपातिथम्। असाइ प्राशा ३। हा।
औहो २३४ हा॥ ४७॥ 5

यदिन्द्र प्रागपागुदक् (ग्रा. ७. ५. २७९. १-२) इत्यनयोर्द्वितीयं नैपातिथं निपातिथिना दृष्टमिति॥ ४७॥

पज्रम्। विपा। गिरौवा ओ २३४ वा। धर्ता।
रं व्यौ वा ओ २३४ वा॥ ४८॥

यदा कदा च मीढुषे (ग्रा. ८.६.२८८.१-३) इत्येषामन्त्यं पज्रम्। 10 वसिष्ठस्य पज्राणि त्रीणि। पज्रस्य वा वासिष्ठस्य। सफस्य वा पाज्र्यस्य (आ. ब्रा. ३. ६. ६) इति। तस्य पर्वचतुष्टयं प्रस्तावः। जारान्तो वीङ्क वसिष्ठस्यप्रियपज्राणाम् (पु.सू.१०.१०.१७) इति वचनात्। उपात्तः प्रतिहारः॥ ४८॥

वैयश्वम्। धियाशविष्ठ आ २३ होइ॥ ४९॥ 15

उभयं शृणवच्च न (ग्रा. ८. ६. २९०. १) इत्येतद् वैय्यश्वम्। व्यश्वेनाङ्गिरसेन दृष्टमिति॥ ४९॥

बार्हदुक्थम्। नकिष्टा २३ दा॥ ५०॥ 18

---

2. B[1]. बाद्य अभ्यस्तः for आद्यम्। अस्य अभ्यस्तः; B[1]B[2]MAS[1]S[2]. Om. अस्य; S[1]. साभ्यस्तः for अभ्यस्तः.

3. AB[1]B[2]H. om. प्रतिहारः.

न त्वा बृहन्तो अद्रयः (ग्रा.८.७.२९६.१) इत्येतत् बार्हदुक्थम्। बृहदुकूथेन वाम्नेयेन वा दृष्टमिति ॥ ५० ॥

१र २
वाशम्। मन्दाना २३ : शी ३ ॥ ५१ ॥

क ईं वेदा सुता सचा (ग्रा. ८. ७. २९७. १) इत्येतत् वाशम्।
5 तस्य वाश ऋषिः। पर्व प्रस्तावः। न्याय्यः प्रतिहारः ॥ ५१ ॥

१ २ ३र २
माधुच्छन्दसम्। उपास्वासा। औहो ३४
३र २
वा हा ॥ ५२ ॥

त्वामिदाह्यो नर (ग्रा. ८. ७. ३०२. १) इत्येतत् माधुच्छन्दसम्। मधुच्छन्दसा दृष्टमिति ॥ ५२ ॥

10 इति श्री वरदराजविरचितायां दशतयीवृत्तौ
11 प्रतिहारसूत्रव्याख्यायां पञ्चमः खण्डः ॥ ५ ॥

---

2. B². नाम्नेयेन, B¹. याम्नेयेन for वाम्नेयेन.

8. S¹S². Om. एतत्.

11. B. after खण्डः adds:—श्री गुरुभ्यो नमः। श्रीरामचन्द्राय नमः। श्रीगुरुभ्यो नमः। श्री हरे सर्वलोकशरण्य श्रीराम—

# षष्ठः खण्डः

## आइही निहवः ॥ १ ॥

आइही इत्यादिकम् असावि देवं गो ऋजीक ३ मान्धा ३ः (ग्रा. ८. ९. ३१३. १-२) इत्यनयोर्द्वितीयं निहवः । वसिष्ठस्य निहवौ द्वौ इति । सस्तोभः पदविभाग्यः ॥ १ ॥ 5

## औरुक्षयम् । सृजाद्धारा २ः ॥ २ ॥

अदर्दरुत्समसृजः (ग्रा.८.९.३१५.१-२) इत्यनयोरुत्तरम् औरुक्षयम् । उरुक्षयस्तस्य ऋषिः । अष्टाक्षरः प्रस्तावः । अष्टावौरुक्षयजागतसोमसाम्नोः (पु. सू. १०. ११. १०) इति वचनात् । न्याय्यः [प्रतिहारः] ॥ २ ॥

## पूर्वं वा पदम् ॥ ३ ॥ 10

यद्वा न्याय्यात् पूर्वं पदं तृतीयः पादः । प्रतिहार इत्यर्थः ॥ ३ ॥

## पार्थम् । ओ ३ हो ३ होइ ॥ ४ ॥

सुष्वाणास इन्द्रस्त्वमसि (ग्रा. ८. ९. ३१३. १-२) इत्यनयोः द्वितीयं पार्थं पृथुना वैनेन दृष्टमिति । तच्च सस्तोभपदविभाग्यम् । अस्य पवस्व वाजसातये (सा. १०१६) इत्यादिषु गानविशेष ऊहाम्नायसिद्धः ॥ ४ ॥ 15

---

2. B[1]. निहवम् for निहवः.
3. AB[2]M. om. आइही इत्यादिकम् ; H. after आइही adds : निहवः.
5. H. अस्तोभः for सस्तोभः.
9. H. om. न्याय्यः.
14. M. B[1]. वैश्येन for वैनेन.
15. AB[2]. गण for गान ; HO. °विशेषात् for °विशेषः ;

M. ऊहसाम्नायसिद्धम् for ऊहाम्नायसिद्धः ; HO. °सिद्धाः for °सिद्धः

## जगृ वात्सप्रे तृतीयोत्तमे ॥ ५ ॥

जगृह्मा ते (ग्रा.८.९.३१७.१-५) इत्येषां पञ्चानां तृतीयोत्तमे सामनी वात्सप्रे सस्तोभपदविभाग्ये। अनयोरेकार्षेययोर्विनियोगं व्यवस्थापयति ॥ ५ ॥

## परमनादेशे ॥ ६ ॥

5 यथा चतुर्थेऽहनि ब्राह्मणम्—वात्सप्रं भवति। वत्सप्रीर्भालन्दनः श्रद्धां नाविन्दत (तां.ब्रा.१२.११.२३; २५) इत्यादि। तृतीयं तु यत्रैवादिश्यते तत्रैव ग्राह्यम्। यथा व्यूढरूपिणि वात्सप्राणां तृतीयं कुर्यात्। होइ २। होई २। होई २। जगृह्मातदक्षिणम् इत्यादि ॥ ६ ॥

## नाके यामम् ॥ ७ ॥

10 आ २ याम् इत्यादि स्तोभोपक्रमं नाके सुपर्णम् (ग्रा. ८.९.३२०.१) इत्येतत् यामम्। यमस्तस्य ऋषिः। सर्वस्वारे परिसामत्वेन विनियोगः ॥ ७ ॥

## वृत्रस्य द्यौतानम् ॥ ८ ॥

संख्यानादेशे वर्गाद्यम् (प्र.हा.सू.२.७) इति वचनात् वृत्रस्य त्वाश्व सथादीषमाणाः (ग्रा.८.१०.३२४.१-२) इत्यनयोराद्यं द्यौतानम्। द्युतानेन
15 मारुतेन दृष्टमिति। तच्च सस्तोभपदविभाग्यम्। अस्य निधनविकारमाचार्यो वक्ष्यति। द्यौतानयो रा ईन्द्रा इत्यादिना। स (तत्?) तु यन्निरुक्तं निधनमुपेयुः (तां. ब्रा. १७. १. ८) इत्यादि ब्राह्मणं व्याचक्षाणेन सूत्रकारेण प्रत्याख्यातम्।
18 इन्द्रेति वा द्यौताने निधनं निराहुस्तस्य प्रतिषेधो यथा समाम्नायमेवोपेयुरिति ॥ ८ ॥

---

8. M. °विभाग्य for °विभाग्ये.

6. M. अतिदिश्यते for आदिश्यते; H. om. तत्रैव ... इत्यादि (L. 8.)

10. B[1]. स्तोभोपलक्षणं for स्तोभोपक्रमम्.

15. H. स्तोभ for सस्तोभ.

17. H. om. आदि ब्राह्मणं ... दीक्षणीयायां (p. 95. L. 4).

## ताक्ष्यसामनी ॥ ९ ॥

स्वस्तये ताक्ष्यमिति लिङ्गात् त्यमूषु (ग्रा. ९. ११. ३३२. १-२) इत्येते ताक्ष्यसामनी। ताक्ष्यस्य ऋषेः सामनीति। अत्र सूत्रम्— दीक्षणीयायां ताक्ष्यसामनी गायेत्। त्यमूष्वित्येते (        ) इति ॥ ९ ॥ 5

## वार्त्रतुरम्। विसाइ। ना। भिर्भयमाना२३ः ॥ १० ॥

यजामहोवा (ग्रा. ९. ११. ३३४. १) इत्येतत् वर्त्रतुरम्। वृत्रतुरा दृष्टमिति। तस्य वान्तः प्रस्तावः। अष्टाक्षरः प्रतिहारः ॥ १० ॥

## उद्वंशीयम्। उद्वंशमिवया १ इमी ३ रे ॥ ११ ॥

गायन्ति त्वा (ग्रा. ९.१२.३४२.१-३) इत्येषामन्त्यम् उद्वंशीयम्। 10 विश्वेषां देवानामुद्वंशीयं तृतीयम् (आ. ब्रा. ३. १२. १) इति उपात्तः प्रतिहारः ॥ ११ ॥

पक्षान्तरमाह—

## चतुरक्षरो वाभ्यासादिः ॥ १२ ॥

यद्वा उद्व२ंशा २३४ मी इत्ययमभ्यासादिश्चतुरक्षरः प्रतिहारः। 15 उवियन्तर्न्निधनम्। तस्य स्थाने इडिति तथास्वरं प्रथमस्वरं वा ब्रूयुः। उवित्यर्धेडा प्रकृतिस्वरा प्रथमस्वरा वा (        ) इति सूत्रवचनात् ॥ १२ ॥

## ऐयावती आष्टादंष्ट्रे ॥ १३ ॥

इन्द्रं विश्वा अवीवृधन् (ग्रा. ९. १२. ३४३. १-७) इत्येषां 19

---

2. S². after ताक्ष्यमिति adds :— सामनी.

9. O. Om. उद्वंशीयम् ... वाभ्यासादिः ॥ (L. 14).

16. AMB². एतत् for अन्तर्; MAB¹B²S¹. om. तथास्वरं; S². प्रकृतिस्वरं for तथास्वरं.

17. HO. प्रकृतिः। प्रस्वरं for प्रकृतिस्वरा.

चतुर्थपञ्चमे यथाक्रमम् **ऐयाहाइ—ऐयात्** । **औ होवा** इत्येताभ्यां स्तोभाभ्यां युक्तत्वात् **ऐयावती** सामनी । **आष्टादंष्ट्रे** । अष्टादंष्ट्रेण वैरूपेण दृष्टे इति । ते च विभाग्ये । सूत्रकारश्चैते विभाग्येषु पठति **वषट्कारणिधनमाष्टादंष्ट्रे** इति ॥ १३ ॥

5 अनयोरेकार्षेययोर्विनियोगनियमं दर्शयति—

## पूर्वं सकृदनुकृथ्येऽहीनरात्रौ ॥ १४ ॥

तयोः पूर्वमुकृथ्यव्यतिरिक्तस्थाने सकृत् प्रयुज्यते । एकत्रैवेत्यर्थः । कुत्रेत्यपेक्षायामुक्तम् अहीनरात्राविति । तत्र कल्पः—**अहीनिक्यां रात्रौ पन्यंपन्यमित्सोतारमिति । श्रौतकक्षं दैवोदासं होतृषाम कौत्सस्य**
10 **लोके आष्टादंष्ट्रमा त्वाविशन्त्विन्दव** इत्येतासु (आ. क. ६. १. १) इति । **सकृदनुकृथ्य** इति वचनात् अहीनरात्रेरन्यत्रोकृथ्येष्वेव प्रयुज्यते इत्युक्तं भवति । यथा द्वितीयस्वरसाम्नि द्वितीयस्य च द्वितीयेऽहनि **साकमश्वं सौभराष्टादं-मित्युकृथ्यानि** (आ. क. २. ३. ८) इति ॥ १४ ॥

## उकृथ्यं द्विरुत्तरमभिप्लव बैदत्रिरात्रयोः ॥ १५ ॥

15 उत्तरमाष्टादंष्ट्रं उकृथ्यत्वे (उकृथ्ये ?) द्विःप्रयुज्यते । द्वयोः स्थानयोरित्यर्थः । कयोः ? अभिप्लवबैदत्रिरात्रयोः । तत्राभिप्लवस्य त्रिरात्रयोः द्वितीयेऽहनि
17 कल्पः—**साकमश्वमभ्रातृव्योऽनात्वमित्यामहीयवमाष्टादंष्ट्रं यदौहोवेति** ।

---

1. HO. आभ्यां for एताभ्यां.
2. HO. om. आष्टादंष्ट्रे.
3. S². तेषु for ते च ; MAB¹B²S¹S². om. विभाग्ये । सूत्रकारश्चैते.
5. B¹. आर्षेययोः for एकार्षेययोः ; HO. om. विनियोग°.
12. MOS¹S². द्वितीये for द्वितीय° ; H. द्विदिवस्य for द्वितीयस्य ; AB². om. द्वितीयस्य च द्वितीयेऽहनि.
15. S¹S². after दंष्ट्रं adds :— इति ; AB². om. उकृथ्य...आष्टादंष्ट्रं (L. 17) ; M. उकृथ्यत्वेन for उकृथ्यत्वे ; B¹. om. उकृथ्यत्वे ... बैदत्रिरात्रयोः (L. 16).
16. S¹S². om. त्रिरात्रयोः.

(आ. क. १. २. ७.) वैदत्रिरात्रे च प्रथमेऽहनि **औशनमौपगवमाष्टादंष्ट्रं प्रत्यस्मै पिपीषत इति नानदं षोडशिसाम** (आ. क. ६. ७. १.) इति। आभ्यामन्यत्राहीनरात्रिव्यतिरिक्ते स्थाने उत्तरमेवाष्टादंष्ट्रमित्युक्तं भवति। यथा चतुर्थेऽहनि माध्यंदिने पवमाने। **आष्टादंष्ट्रं भवति। यदेवाष्टादंष्ट्रस्य ब्राह्मणम्** (तां. ब्रा. १२.९.१४-५.) इति। अनोक्तायां व्यवस्थायामाचार्य- स्मरणमेव मूलमिति ॥ १५ ॥ 5

## ज्योतिष्टोमे च विकल्पः ॥ १६ ॥

**आष्टादंष्ट्रे ऋद्धिकामाय कुर्या**दिति द्विवचनेन विधानात् समुच्चये स्तोमातिरेकप्रसङ्गाच्च ज्योतिष्टोमे तयोर्विकल्पः। ननु च दाशरात्रिकेऽपि द्वितीये अहनि आष्टादंष्ट्रे भवतः इति द्विवचनेन विधानात् तयोर्विकल्प इति वक्तव्यम्। 10 एवं तर्हि विकल्पानुक्तेरेव लिङ्गात्। **उक्थ्यं द्विरुत्तर**मिति च परिसंख्यानात्। ऊह्याम्नाये च द्वितीयेऽहनि उत्तरस्याम्नानात् पूर्वमेवाष्टादंष्ट्रं तत्र प्रयोज्यम्। न तु विकल्प इत्यवसीयते। ब्राह्मणे तु द्विवचनोपादानं प्रसङ्गादितरस्यापि प्रशंसार्थमिति ॥ १६ ॥ 14

---

2. B²A. after पिपीषत इति adds:—गौरीवितमिति पुस्तकान्तरे; S². after नानदं adds:— गौरीवितं; M. after इति adds:—ग्रन्थान्तरे गौरीवितं प्रत्यस्मै पिपीषतमिति षोडशिसामेति वर्तते.

3. B¹. °रात्र° for °रात्रि°, M. °रिक्त° for °रिक्ते.

8. O. om. आष्टादंष्ट्रे...विकल्पः (L. 9); M. om. द्वि°.

9. H. स्तोभ° for स्तोम°; B¹B². दाशरात्रके for दाशरात्रिके; HOM. om. अपि.

10. HO. om. भवतः HO. मन्तव्यम् for वक्तव्यम्.

11. MAH. उक्थ्य° for उक्थ्यं.

12. HO. उत्तरस्याह्नः उतरम् for उत्तरस्याम्नानात् पूर्वम्.

13. S¹. अवधीयते for अवसीयते; B¹. °दान प्रसङ्गादिति for °दानं प्रसङ्गात्; M. उत्तरस्य for इतरस्य; S¹. om. अपि.

14. HB¹. प्रसङ्गार्थम् for प्रशंसार्थम्.

## महावैश्वामित्रम् ॥ १७ ॥

इन्द्रं विश्वा (ग्रा. ९.१२.३४३.१-७) इत्येषामेव षष्ठं महावैश्वामित्रं सस्तोभपदविभागयम् । तस्य असावि सोम इन्द्र ते (ऊ. गा. द. ९८.) इत्यत्र यज्ञं च मानुषाणामित्यस्य पादस्य यज्ञायज्ञा वो अग्नय (ऊ. गा. प्रा. ४०.) 5 इत्यत्र उत त्राता तनूनाम् इत्यस्य चाभ्यासः पाठविकल्पप्रदर्शनार्थः । यथोक्तं माता वृद्धं श्वामित्रे (पु. सू. ९. १. ६.) इति । उपात्तयोः पादयोः यथाक्रमं मा इत्येतदक्षरं ता इत्येतच्च वृद्धं वैकल्पिकमित्यर्थः ॥ १७ ॥

## गौतमम् । धारा । औहो २३४ वा ।
## ऋता । औहो २३४ वा ॥ १८ ॥

10 इममिन्द्र सुतं पिब (ग्रा. ९. १२. ३४४. १-४.) इत्येषां द्वितीयं गौतमेन दृष्टं गौतमम् । तस्य पादान्त्यं षडक्षरमन्तर्निधनम् । निगदवर्त्तित्वात् । तद्यथा प्रसुन्वानाय (ऊ. गा. द. ३८.) इत्यत्र श्वानमराधसा२ २३४५ म् इति ॥ १८ ॥

## वसिष्ठस्य प्रियम् । धारा ओ २३४ वा ।
15 ## आर्ता ओ २३४ वा ॥ १९ ॥

तेषामन्त्यं वसिष्ठस्य प्रियम् । तस्य पर्वत्रयं प्रस्तावः । जारान्तो वीङ्क 17 (पु. सू. १०. १०. १७.) इत्यादिवचनात् । उपात्तः प्रतिहारः ॥ १९ ॥

---

2. B[1]. trans. महावैश्वामित्रम् ··· तदनादेशे ग्राह्यम् (P. 99, L. 3) after एतोन्विन्द्रं (P. 100, L 5).

6 H. वृद्धं स्वामित्र for माता वृद्धं श्वामित्रम् ; MAB[2]. पदयोः for पादयोः.

7. S[2]B[2]AB[1]S[1]. om. second एतत्.

10. O. trans. पिब ... द्यौतान° (p. 101, L. 13) after इत्येतत् (p. 105 L. 2).

11. O. पादान्तः for पादान्त्यं ; S[1]S[2]. तृतीयपादान्त्यं for पादान्त्यं.

आकूपारमनादेशे ॥ उभयाहा २३ ॥ २० ॥

**यदिन्द्र चित्र म इह** (ग्रा. ९. १२. ३४५. १-४) इत्येषां तृतीयमाकूपारम् तदनादेशे ग्राह्यम्। यथा नवमेऽहनि। **आकूपारं भवति। अकूपारो वा एतेन कश्यपः** (तां.ब्रा.१५.५.२९-३०.) इत्यादि। **आ तू न** (ऊ.गा.द.२४) आकूपारं रात्रावेवेत्युक्तम्। **परित्य** (ऊ.गा.द.२०३.) आकूपारं तु यत्रैवादिश्यते तत्रैव ग्राह्यम्। यथा रोहितकूलीययोः **पुरोजिती वो अन्धस** (ऊ. गा. अ. ८९.) इत्याकूपारं तिसृषु **परि त्यं हर्यतं** हरिमिति यत् स्वयोनिरिति ॥ २० ॥ 5

वीङ्कं तस्यैष एवोच्चादिः ॥ २१ ॥

तेषामेव चतुर्थं वीङ्कम्। **गृत्समदस्य वीङ्कानि चत्वारि। वसिष्ठस्य वा। आकूपारं वैषां तृतीयम्** (आ. ब्रा. ३. १२. ४.) इति। तस्य पर्वत्रयं प्रस्तावः। **जारान्तो वीङ्क** (पु. सू. १०. १०. १७.) इत्यादिवचनात्। **उभयान २३ हा** इत्येष एव प्रथमस्वरादिः प्रतिहारः ॥ २१ ॥ 10

तैरश्चम्। रायास्पूर्द्धी ३। हा ३ हाइ ॥ २२ ॥

**श्रुधी हवं तिरश्च्याः** (ग्रा. ९. १२. ३४६. १-२) इत्यनयोर्द्वितीयं तैरश्चं तिरश्चाङ्गिरसेन दृष्टमिति ॥ २२ ॥ 15

वैश्वामित्रम्। रजाः। सूर्यौ वा ओ २३४ वा ॥ २३ ॥ 17

---

4. M. आकूपारः for अकूपारः; B[1]. इतीत्यादि for इत्यादि; HO. om. आदि। आ तू नः.

6. M. अतिदिश्यते for आदिश्यते; AMB[2]. पुरोगौतम कौत्सस्य कल्पः for रोहितकूलीययोः; H. पुरोहित° for रोहित°.

7. OHAB[1-2]. यस्य योनिः for यत् स्वयोनिः.

14, 16. HA. तैरश्च्यम् for तैरश्चम्.

**असावि सोम इन्द्र** (ग्रा.९.१२.३४७.१) इत्येतत् **वैश्वामित्रम्** । तस्य विश्वामित्र ऋषिः । पर्वद्वयं प्रस्तावः । **वारान्तो वैश्वामित्रे** (पु. सू. १०. १०. १८.) इति वचनात् । उपात्तः प्रतिहारः ॥ २३ ॥

## शुद्धाशुद्धीये । तयोर्न्याय्यौ ॥ २४ ॥

**एतोन्विन्द्रं स्तवाम** (ग्रा.९.१२.३५०.१-२.) इत्येते **शुद्धाशुद्धीये** । लिङ्गात् । **इन्द्रस्य शुद्धाशुद्धीये द्वे । वसिष्ठस्य वा** (आ. ब्रा. ३. १२. ९) इति श्रुतिः ॥ २४ ॥

## पूर्वमनादेशे ॥ २५ ॥

यथाष्टमेऽहनि ब्राह्मणम्—**शुद्धाशुद्धीयं भवति । इन्द्रो यतीन् सालावृकेभ्यः प्रायच्छत्** (तां. ब्रा. १४. ११. २८-९.) इत्यादि । उत्तरं तु सत्येवादेशे ग्राह्यम् । यथा अभिप्लवस्य चतुर्थेऽहनि उक्थेषु । **सैन्धुक्षितं सौभरं वीङ्कं शुद्धाशुद्धीयं वा यदिडाभिरैडम्** (आ. क. १. ५. ७.) इति ॥ २५ ॥

## नानदम् । आपश्चादा ॥ २६ ॥

**प्रत्यस्मै पिपीषते** (ग्रा. ९.१.३५२.१-३.) इत्येषामन्त्यं **नानदम्** । **इन्द्रस्य नानदं तृतीयम् । नदतो वाङ्गिरसस्य** ॥ (आ.ब्रा.४.१.१.) इति । तस्य पादद्वयं प्रस्तावः । **द्विपात्संजयनानद** (पु.सू. १०.१०.११.) इत्यादि-

---

2. S[1]S[2]. om. तस्य…प्रतिहारः ॥ (L. 3).

7. M. श्रुतेः for श्रुतिः ; B[1]. om. श्रुतिः.

11. HO. यत्रैवादिश्यते तत्रैव for सत्येवादेशे ; B[1]. °प्लव° for °प्लवस्य ; HOMA. उक्थ्येषु for उक्थेषु.

15. M. तृतीयं for अन्त्यं.

17. B[1]. om. तस्य.

वचनात् । न्याय्यः प्रतिहारः । **पुरोजितीति** तृचे स्वासूत्तरयोश्च द्वितीये पादे स्वरविकल्पः । तदुक्तम्—**पुरःस्वासूत्तरयोश्चारङ्गनानदे** (पु. सू. ९. १. ४.) इति ॥ २६ ॥

**मधुश्चुन्निधनम् । दाइवेषु धा ३ ।**
**हा ३ हाइ । औ ३ हो ३ वा । आइही २ ॥ २७ ॥** 5

**स पूर्व्यो महोनाम्** (ग्रा. ९. १. ३५५. १.) इत्येतत् **मधुश्चिन्निधन**-मन्वर्थसंज्ञं प्राजापत्यम् ॥ २७ ॥

**मारुतम् । धर्ता । वाञ्ञौ वा ओ २३४ वा ॥ २८ ॥**

**पुरां भिन्दुर्युवा कविः** (ग्रा. ९. १. ३५६. १.) इति एतत् मरुद्भिर्दृष्टं **मारुतम्** । अस्यानुष्टुभस्य मारुतस्यानुच्छन्दसं विनियोगः । यथा अष्टमेऽहनि 10
उक्थोत्तमे एन्दुमिन्द्रायेत्यौष्णिहं मारुतम् । तस्य विशेषवचनात् अनुच्छन्दसमपि । तथा च व्रात्यस्तोमे कल्पः—**रथन्तरं च वामदेव्यं चाधाहीन्द्रगिर्वण एन्दुमिन्द्राय सिञ्चत इति द्यौतानमारुते** (आ.क.३.९.४.) इति ॥ २८ ॥

**त्रैशोकम् । उतोहाइ ॥ २९ ॥**

**विश्वाः पृतनाः** (ग्रा. १०. ३. ३७०. १) इत्येतत् **त्रैशोकम्** । तस्य 15
त्रिशोक ऋषिः । **विश्वोहाइ** इति प्रस्तावः । **यौक्ताश्वैडायास्यत्रैशोकक्रोश-श्रौष्टोद्वंशपुत्रसहोदैर्घतमससिमानान्निषेधवैराजानां** द्व्यक्षरः (पु. सू. १०. ११. १.) इति वचनात् ॥ २९ ॥ 18

---

2. H. पुरं, O. सुरथं, B². पर for पुरः.
4. A. मधुच्छुन्निधनम् for मधुश्चुन्निधनम्.
10; 11. B¹. अच्छन्दसं for अनुच्छन्दसम्.
11. S¹S². उक्थ्योत्तमे for उक्थोत्तमे.
13. O. after सुतं (p.80, L.16) resumes °मारुते.
15. M. om. तस्य त्रिशोक ऋषिः.
17. M. after द्व्यक्षरः adds:—प्रस्तावः.

## शैखण्डिनम् ॥ ३० ॥

वैशोकादनन्तरं अत्ते दधामि प्रथमा (ग्रा. १०. ३. ३७१. १-८) इत्येषामाद्यं शिखण्डिना दृष्टं शैखण्डिनम् । विभाग्यम् ॥ ३० ॥

## अच्छत्रासदस्यवमुत्तरम् ॥ ३१ ॥

5 अच्छाव इन्द्रं मतयः स्वर्युवः (ग्रा.१०.३.३७५.१-२.) इत्यनयोरुत्तरं त्रसदस्युना दृष्टं त्रासदस्यवम् । विभाग्यमेव ॥ ३१ ॥

## वैघनं सोमसाम । यस्यद्यावोनविचरन्ति ३ मानुषम् । ओ ३४ । हाहोइ ॥ ३२ ॥

आभि त्यं मेषम् (ग्रा. १०. ३. ३७६. १) इत्येतत् सोमसाम । 10 सोमर्षित्वात् । तच्च विघन एव विनियुज्यते । तत्र कल्पः—आग्नीध्रागारादुत्तरं सोमसामाथर्वणं वा (आ.क.५.७.४.) इति । अन्यत्र त्वनादेशे यस्ते मद- द्वितीयं सोमसाम विनियोजयिष्यति । अस्याष्टाक्षरः प्रस्तावः । अष्टावौरुक्षय जागतसोमसाम्नोः (पु.सू १०.११.१०.) इति वचनात् । उपात्तः प्रतिहारः । ऊपास्थाने इन्द्र इव दस्यूँरमृगा २३४५ इत्यादिनिधनानि दर्शयिष्यति ॥ ३२ ॥

## 15 वरुणसाम । विष्काभा २३ इते ॥ ३३ ॥

घृतवती भुवनानामभिश्रिया (ग्रा.१०.३.३७८.१-२.) इत्यनयोराद्यं 17 वरुणसाम । वरुणर्षित्वात् । ए ३ । इन्दुःसमुद्रमित्यादि निधनम् ॥ ३३ ॥

---

7. M. वैघानसं, B[1]. वैखानसं for वैघनं.
9. O. om. मेषम्...आथर्वणम् (L.11 ).
10. S[1]S[2]. सोमार्षत्वात् for सोमर्षित्वात् ; B[2]. विखन° for विघन°.
11. H. मदायां for मद.
12. HO. विनियोगयिष्यते, M. विनियोजयिष्य इति for विनियोजयिष्यति.
14. HO. om. आदि.
17. S[1]S[2]. वरुणार्षत्वात् for वरुणर्षित्वत्.

## शैखण्डिनम् ॥ ३० ॥

वैशोकादनन्तरं श्रत्ते दधामि प्रथमा (ग्रा. १०. ३. ३७१. १-८) इत्येषामाद्यं शिखण्डिना दृष्टं शैखण्डिनम् । विभाग्यम् ॥ ३० ॥

## अच्छत्रासदस्यवमुत्तरम् ॥ ३१ ॥

5 अच्छाव इन्द्रं मतयः स्वर्युवः (ग्रा.१०.३.३७५.१-२.) इत्यनयोरुत्तरं त्रसदस्युना दृष्टं त्रासदस्यवम् । विभाग्यमेव ॥ ३१ ॥

## वैघनं सोमसाम । यस्यद्यावोनविचरन्ति २ मानुषम् । ओ ३४ । हाहोइ ॥ ३२ ॥

आभि त्यं मेषम् (ग्रा. १०. ३. ३७६. १) इत्येतत् सोमसाम ।
10 सोमर्षित्वात् । तच्च विघन एव विनियुज्यते । तत्र कल्पः—आग्नीध्रादुत्तरं सोमसामाथर्वणं वा (आ.क.५.९.४.) इति । अन्यत्र त्वनादेशे यस्ते मद-द्वितीयं सोमसाम विनियोजयिष्यति । अस्याष्टाक्षरः प्रस्तावः । अष्टावौरुक्षय जागतसोमसाम्नोः (पु.सू १०.११.१०.) इति वचनात् । उपात्तः प्रतिहारः । ऊपास्थाने इन्द्र इव दस्यूँरमृगा २३४५ इत्यादिनिधनानि दर्शयिष्यति ॥ ३२ ॥

## 15 वरुणसाम । विष्काभा २३ इते ॥ ३३ ॥

घृतवती भुवनानामभिश्रिया (ग्रा.१०.३.३७८.१-२.) इत्यनयोराद्यं
17 वरुणसाम । वरुणर्षित्वात् । ए ३ । इन्दुस्समुद्रमित्यादि निधनम् ॥ ३३ ॥

---

7. M. वैघानसं, B[1]. वैखानसं for वैघनं.
9. O. om. मेषम्...आथर्वणम् (L.11 ).
10. S[1]S[2]. सोमार्षत्वात् for सोमर्षित्वात्; B[2]. विखन° for विघन°.
11. H. मदायां for मद.
12. HO. विनियोगयिष्यते, M. विनियोजयिष्य इति for विनियोजयिष्यति.
14. HO. om. आदि.
17. S[1]S[2]. वरुणार्षत्वात् for वरुणर्षित्वत्.

श्येनम् । सम्रौ ३ हो । भद्रौ ३ हो ॥ ३४ ॥

उभे यदिन्द्र रोदसी (ग्रा. १०. ३. ३७९. १.) इत्येतत् श्येनाख्यं साम । तस्येन्द्र ऋषिः । उपात्तौ प्रतिहारौ ॥ ३४ ॥

पूर्वे वातः पादे ॥ ३५ ॥

अतः उपात्ताभ्यां प्रतिहाराभ्यां यौ पूर्वौ पादौ महान्तं त्वा महीनाम्—देवीजनित्र्यजीजनत्—इति एतौ वा श्येनस्य प्रतिहारौ । इव आ । ना ३ मा । ए ३ । जनदा ३ २ इति त्रीणि निधनानि । गीतं च निधनस्वरम् इति वचनात् । अत्र ग्राम्यारण्यकयोः श्येनयोः सामान्तयोगेनैव विनियोगनियमः सिद्धः । तथा हि ब्राह्मणे षष्ठेऽहनि अच्छावकसामत्वेन श्येनो विहितः । स च प्राकृतस्य कालेयस्यैडस्य स्थाने विधीयमान ऐड एव युक्तः । तथा व्यूढरूपिणि कल्पः—त्रिणिधनो ग्रामेगेयः श्येनः त्रिणिधनस्य स्थाने दाशस्पत्यस्येति ॥ ३५ ॥

इति श्रीवामनार्यसुतवरदराजविरचितायां दशतयीवृत्तौ
प्रतिहारसूत्रव्याख्यायां षष्ठः खण्डः ॥ ६ ॥

---

3. B[1]. after उपात्तौ adds :—द्वौ.

4. B[1]HO. वान्तः for वातः.

5. S[1]AMB[1]B[2]. om. प्रतिहाराभ्यां ; S[2]. पराभ्यां for प्रतिहाराभ्यां.

8. HO. सामान्येन इव विनियोगः सिद्धः for सामान्त ... सिद्धः.

9. S[1]HO. (S[1]. तथाहि) तथापि ब्राह्मणे न पञ्चमे for तथाहि ब्राह्मणे षष्ठे.

11. B[2]. स्वरूपिणि for रूपिणि.

# सप्तमः खण्डः

## क्रोशम् । स्या ३ दाक्षा ३ स्या ॥ १ ॥

**इन्द्र सुतेषु सोमेषु** (ग्रा. १०. ४. ३८१. १-३) इत्येषामाद्यं **क्रोशम्** । तस्येन्द्र ऋषिः । इन्द्रा इति प्रस्तावः । **यौक्ताश्वैडयास्यत्रैशोकक्रोश** (पु. सू. १०. ११. १.) इत्यादिवचनात् । स्या ३ दाक्षा ३ स्या इति
5 प्रतिहारः ॥ १ ॥

## कौत्सं रात्रिषाम । महा २३४ हिषा ३४३ः ॥ २ ॥

तेषामेव तृतीयं **कौत्सम्** । तच्चोत्तमे रात्रिपर्याये विनियुज्यते । तथा च ब्राह्मणम्—**इन्द्रसुतेषु सोमेष्विति कौत्सम्** । कुत्सश्च लुशश्चेन्द्रं व्यह्वयेताम्
10 (तां. ब्रा. ९. २. २०-१.) इत्यादि । रात्रेरन्यत्र तु **य इन्द्र चमसेषु** (ग्रा. ५. ५. १६२. १-२.) इत्यनयोरैडमनादेश इति प्रागेवोक्तम् ॥ २ ॥

## पूर्वं वा चतुरक्षरम् ॥ ३ ॥

अथवा उगात्तादगन्त्याच्चतुरक्षरात्पूर्वं स्यदक्षस्येत्येतच्चतुरक्षरं कौत्सस्य प्रतिहारः ॥ ३ ॥

15
## तदोकोनिधनम् ॥ ४ ॥

**तमू ष्वभिप्रगायत** (ग्रा. १०. ४. ३८२. १-४.) इत्येषां तृतीयम्
17 **ओकोनिधन**मन्वर्थसंज्ञम् । तस्य ऋषिः प्रहितुः । **प्रहितोः संयोजने द्वे** ।

---

4. MB²A. आयास्येति for ऐडयास्यत्रैशोकक्रोशेति.

8. M. before तेषाम् adds :- पादप्रस्तावः ; H. after पर्याये adds :—अपि.

10. H. om. तु.

11. H. एवम् for ऐडम्.

**ओकोनिधनं वैनयोः पूर्वम्** ॥ (आ. ब्रा. ४. ४. २.) इति श्रुतेः । **तदिति** ऋगन्त्याच्चतुरक्षरात् पूर्वं चतुरक्षरं **तविषा २३४ मा** इत्येतत् । प्रतिहार इत्यर्थः ॥ ४ ॥

हारिवर्णम् । उलोका३कू३ । होवा३हा ॥ ५ ॥

**तं ते मदं गृणीमसि** (ग्रा. १०. ४. ३८३. १-४) इत्येषामन्त्यं 5
**हारिवर्णं** हरिवर्णेन आङ्गिरसेन दृष्टमिति ॥ ५ ॥

त्रैतम् । यद्वा मरुत्सुम३० दासो २३४ हाइ ॥ ६ ॥

**यत्सोममिन्द्र विष्णवि** (ग्रा.१०.४.३८४.१-४.) इत्येषामाद्यं त्रितेन **दृष्टं त्रैतम्** । एकारादिकमन्त्यं पर्व निधनम् ॥ ६ ॥

मारुतम् । चोदयताइमा३ ही ॥ ७ ॥ 10

**एन्दुमिन्द्राय सिञ्चत** (ग्रा.१०.४.३८६.१) इति **मारुतम्** ॥ ७ ॥

वैश्वमनसम् । स्तियाये ॥ ८ ॥

**एतोन्विन्द्रं स्तवाम** (ग्रा. १०. ४. ३८७. १) इति **वैश्वमनसम्** । तस्य विश्वमना ऋषिः । **नरभाकृष्टीर्योविश्वा अभि** इत्यन्तर्निधनम् । निगद-वर्तित्वात् । **पवस्व देव वीतय** (ऊ. गा. द. १९७.) इत्यत्र **जस आकलशं** 15
**मधुमान्त्सो** इति निधनम् । एवमुत्तरयोरपि द्रष्टव्यम् ॥ ८ ॥

सौमित्रम् । औहोहोइ ॥ ९ ॥

**इन्द्राय साम गायत** (ग्रा. १०. ४. ३८८. १-३.) इत्येषामन्त्यं सुमित्रेण दृष्टं **सौमित्रं** स्तोभविभाग्यम् । तस्य वान्तः स्तोभः प्रस्तावः । तदुक्तम्—**स्तोभ उपायान्तः पदनिधनेषु । निधनं च तदङ्गं स्यात्** 20

19. AB². om. स्तोभः.

(पु.सू. १०. ११. १३-१४.) इति । अस्यार्थः । वागाद्युपायान्ताः स्तोभाः पदनिधनेषु प्रस्तावः । ततः परं च निधनं प्रस्तावाङ्गमिति । ननु सर्वप्रयोज्यं निधनम् । तत् किमुच्यते प्रस्तावाङ्गमिति । अत्राहुः—प्रस्तावान्ते चोदितं कुशाविधानम् उद्गातुरोङ्कारवचनं च प्रस्तावात् परं निधनमप्युक्त्वैव कर्तव्यम् । न तु ततः पूर्वमिति प्रदर्शनार्थम् । निधनं च तदङ्गं स्यादित्युक्तमिति । प्रथमः पादो निधनम् । वान्तस्तोभ उद्गीथः । द्वितीयः पादो निधनम् । स एव स्तोभः प्रतिहारः । ब्रह्मकृते विपश्चित इत्यादि निधनम् । स एव स्तोभ उपद्रवः । ए३ । पनस्यवे २३४५ इति निधनम् । एवमुत्तरयोरपि द्रष्टव्यम् ॥ ९ ॥

## त्रैककुभं तृतीयम् । ष्कू २३४ ताः ॥ १० ॥

**य एक इद्विदयते** (ग्रा. १०. ४. ३८९. १-३.) इत्येषां तृतीयं **त्रैककुभं** त्रिककुभा दृष्टमिति । उपात्तः सामांशो द्वितीयस्यापि साधारण इति तद्व्यावृत्त्यर्थं तृतीयमिति विशेषणम् । अथवा **संनिपाते च पूर्वम्** (प्र. हा. सू. २. ६.) इत्युक्तत्वात् आद्यस्यैव ग्रहणं स्यात ॥ १० ॥

## आक्षारम् । यद्धा ३४ ९ सिवा ॥ ११ ॥

**गृणे तदिन्द्रते शव** (ग्रा.१०.५.३९१.१-३.) इत्येषां द्वितीयमाक्षारं प्राजापात्यम् ॥ ११ ॥

---

1. H. उपायान्तः स्तोभान्तः ; B[1]. उपयान्त स्तोभः, S[1]. उपयान्तः स्तोभः, for उपायन्ताः स्तोभाः ; S[2]. उपयान्तः for उपायन्ताः.

2. H. om. इति । ननु.

3. B[1]. अन्तर्निधनम् for निधनम् ; M. किमर्थम् for किम् ; S[2]. प्रस्तावान्तं for प्रस्तावान्ते ; B[1]. चोदित for चोदितं.

4. S[1]. आदानं for वचनं ; H. om. अप्युक्त्वा ; B[1]. om. एव ; S[1]S[2]. वक्तव्यम् for कर्तव्यम्.

5. S[1]. निधनार्थं for प्रदर्शनार्थम् ; H. निधनपदात् for निधनं च.

7. AB[2]MH. इति, S[2]. इत्यन्तं for इत्यादि.

13. O. तस्य, S[2]B[1]B[2]MHA. अस्य for आद्यस्य,

## दैवोदासे । यस्या ३१ त्यत् ॥ १२ ॥

**यस्य त्यच्छम्बरं मदे** (ग्रा. १०. ५. ३९२. १-४.) इति चत्वारि दैवोदासानि दिवोदासेन दृष्टानीति । तेषां द्वयोरत्रोपादानम् । तत्र यस्या ३१ इति प्रतीकेन प्रथममुपादीयते । त्यत् इति प्रतीकेन या४स्य त्यत् इति चतुर्थम् । तयोः प्रथमं विभाग्यम् । तस्योपास्थाने हीषीस्वरं स्वर्निधनम् ॥ १२ ॥ 5

## पि त्रैककुभे ॥ १३ ॥

चतुर्थं तु त्रिककुब्दशरात्रस्य प्रथमेऽहनि विनियुज्यते । **प्रसुन्वानायान्धस** इति औदलदैवोदासे इति । तस्मिन् त्रैककुभे दैवोदासे **पि** इत्येतदक्षरं प्रतिहारः । तथा च सूत्रम्—**एकादशमैडे दैवोदासे** इति । **सूताः** इत्यन्तर्निधनम् । हीषीस्वरत्वात् । अत्र च **त्रैककुभ** इति वचनात् अभिप्लवाभिषेचनीयादौ सर्वत्र 10 स्वर्निधनमेव दैवोदासं ग्राह्यमित्युक्तं भवति । त्रिककुब्दशरात्रे हि मध्येनिधनस्यैडस्य आन्धीगवस्य स्थाने तथाविधमेव दैवोदासं युक्तम् । अन्यत्र तु सज्ञानपौष्कलयोः स्थाने स्वर्निधनमेवेति भावः ॥ १३ ॥

## सांवर्तम् । गिराइर्नवौ । हो३वा ॥ १४ ॥

**एन्द्र नो गधि प्रिय** (ग्रा. १०. ५. ३९३. १-२.) इत्यनयोः 15 द्वितीयं **सांवर्तम्** । **इन्द्रस्य सांवर्ते द्वे । संवर्तस्य वाङ्गिरसस्य** ॥ (आ. ब्रा. ४. ५. ३.) इति ॥ १४ ॥ 16

---

1. H. या ४ स्यत्यत् for त्यत्.

6. H. अपि त्रैककुभे, B[1]. पित्रै ककुभे for पि त्रै ककुभे.

10. S[1]. स्वरवत् for स्वरत्वात् ; S[1]MAB[1]B[2]S[2]. om. च.

11. H. °दाससर्वग्राह्यं, O. दासं सर्वत्र ग्राह्यं for °दासं ग्राह्यं.

12. S[1]. ऐडायस्यान्धीगवस्थाने for ऐडस्य आन्धीगवस्य स्थाने ; B[1]B[2]AM S[1]S[2]. अन्यत् for अन्यत्र ; M. om. तु.

16. H. च for वा.

२ १ २
सहोदैर्घतमसम् । सोतुबाहुभ्याम् ।
१ १ २
सुयता ३ः । सुयता ३ः ॥ १५ ॥

**पिबा सोमम्** (ग्रा. १०. ५. ३९८. १-२.) इत्यनयोर्द्वितीयं **सहोदैर्घतमसम्** । तस्य दीर्घतमा ऋषिः । पर्व प्रस्तावः । **यौक्ताश्वैडायास्य**
2 (पु. सू. ) इति वचनात् । उपात्तः प्रतिहारः ॥ १५ ॥

१ २ ४ २ ३ ५
शार्करम् । निना । यता ३ मू ३ वस्तुषाइ
न्याय्यो ॥ १६ ॥

**यो न इदमिदं पुरा** (ग्रा. १०. ६. ४००. १-२.) इत्यनयोर्द्वितीयं
१ २ ४ २ ३ ५
**शार्करम्** । तस्य शर्करः शिशुमार ऋषिः । **निनायता ३ मू ३ वस्तुषाइ**
10 इत्यभ्यासः प्रतिहारः । **सखाय आ २३ इ** इति वा ॥ १६ ॥

१ २ २
बृहत्कम् । दृढाची ३ द्या ३ ॥ १७ ॥

**आगन्ता** (ग्रा. ११. ६. ४०१. १.) इति **बृहत्कम्** । तस्य प्रजापति ऋषिः । बृहत्क इत्येके । पर्व प्रस्तावः । **त्र्यक्षरो बृहत्क** (पु.सू.१०.११.६.) इति वचनात् । न्याय्यः प्रतिहारः ॥ १७ ॥

१ २
15 ऐषिरम् । ऊदे १ वाग्मा २३ ॥ १८ ॥

**अधाहीन्द्र गिर्वणः** (ग्रा. ११. ६. ४०६. १-३.) इत्येषां द्वितीयमैषिरम् । **वायोरैषिराणि त्रीणि । ऐषिरस्य वा प्रैयमेधस्य** ॥ (आ. ब्रा.
18 ४. ६. ८.) इति ॥ १८ ॥

---

16. M. मध्यमं for द्वितीयं.
17. O. om. वायोरै°...उपादानम् (p.109 L.2).

## प्राइही यामम् ॥ १९ ॥

**प्रेह्यभीहि धृष्णुहि** (ग्रा. ११. ७. ४१३. १.) इति **यामम्** । अस्य शाखान्तरे विनियोगापेक्षयोपादानम् ॥ १९ ॥

## स्रौग्मतम् । इषाऽस्तो३ तृ३ । भ्या २३ आ३ ॥ २० ॥

**आ ते अग्न इधीमहि** (ग्रा. ११. ७. ४१९. १-२.) इत्येते **स्रौग्मते** । **इन्द्रस्य संजये द्वे** । **स्रौते वा** । **स्रौग्मते वा** ॥ (आ. ब्रा. ४. ८. १.) इति श्रुतेः तयोराद्यमत्रोपादीयते ॥ २० ॥ 5

## संजयम् । इषऽस्तोतृभ्या३ आ ॥ २१ ॥

तयोर्द्वितीयं **संजयम्** । तस्य पादद्वयं प्रस्तावः । उपात्तः प्रतिहारः । अत्र यद्यपि द्वयोरपि द्व्यार्षेयत्वमार्षेयब्राह्मणे न श्रुतं तथाप्याचार्याणां स्मरणादेवं 10 व्यवस्थाश्रयणीयेति भावः । तत्र दाशरात्रिके पञ्चमेऽहनि **संजयं भवति** (तां. ब्रा. १३. ६-६.) इति ब्राह्मणम् । त्रिककुब्दशरात्रे सप्तमेऽहनि **स्रौग्मत-मग्निष्टोमसाम** (आ. क. ८. ६. ६.) इति कल्पः ॥ २१ ॥ 13

---

2. B[1]. om. प्रेहि...उपादानम्.

3. H. तस्य शाखान्तर° for अस्य शाखान्तरे; S[2]. शाखान्तरस्य for शाखान्तरे.

6. M. स्रौग्मते वा स्रोङ्मते वा for स्रौते वा । स्रौग्मते वा.

9. O. om. उपात्तः...प्रस्तावः (p. 111 L.2).

10. H. आर्षेये for आर्षेय ब्राह्मणे; H. आचार्य° for आचार्याणां.

11. M. दशरात्रस्य for दाशरात्रिके; B[1]S[1]S[2]. चतुर्थे for पञ्चमे.

12. H. दशमे for सप्तमे.

13. H. अग्निष्टोमे विकल्पः for अग्निष्टोमसामेति कल्पः.

२र १र ५
सौहविषम् । पूष्णो भा २३४ हाइ ॥ २२ ॥

**परि प्रधन्वा** (ग्रा. ११. ९. ४२७. १-५.) इत्येषामाद्यं **सौहविषम्** । सुहविषा दृष्टत्वात् । तस्य **परिप्रधन्वेत्ययं** पादः प्रस्तावः । उपात्तः प्रतिहारः ॥ २२ ॥

5 **एकं चेदार्षेयमुक्त्वा** (प्र.हा.सू. २.१४.) इत्यादिवचनात् उपादीयमानेऽपि द्वे सौहविषे । तत्र अनादेशे कतम[र ?]त् सौहविषं ग्राह्यमित्यपेक्षायामाह—

तदनादेशे ॥ २३ ॥

**तत्** प्रथममेव सौहविषम् । यथा दशरात्रस्य सप्तमेऽहनि सौहविषं भवति । सुहविर्वा एतेनाङ्गिरस इत्यादि । यथा छन्दोमदशाहस्य द्विपदासु 10 सौहविषमिति । इतरयोस्तु यत्रैवादेशः तत्रैव ग्रहणम् । यथाप्तोर्यामणि कल्पः— **परिप्रधन्वेति स्वर्निधनं सौहविषम्** (आ. क. ६. १. ३.) इति । यथा च दशमेऽहनि ब्राह्मणम्—**यज्ञायज्ञीयनिधनं सौहविषं भवति** (तां. ब्रा. १५. ११. १०.) इति ॥ २३ ॥

अथ स्वर्निधनमुपादत्ते—

४र ३र ४र ५
15 पूष्णे भगाय ॥ २४ ॥

तेषां तृतीयमिदम् । एकारादिकमस्य निधनम् ॥ २४ ॥

17 अथ वाङ्निधनमुपादत्ते—

---

5. H. एवं for एकं ; MAB[2]. उपदास्यमाने for उपादीयमाने.

9. S[2]M. °दशरात्रस्य for दशाहस्य.

10. B[1]. om. कल्पः.

14. H. यथा स्वर्निधनमुपादाने for अथ स्वर्निधनमुपादत्ते.

16. S[1]. ए इत्यादिकम् for एकारादिकम्.

र २ ^ ३ ५
पूष्णौ वा ओ २३४ वा ॥ २५ ॥

तेषामेव पञ्चममिदम् । अस्य पर्येपारी इति प्रस्तावः । अभ्यस्तो द्व्यक्षर (पु. सू. १०. ११. २.) इत्यादिवचनात् । उपात्तः प्रतिहारः । उत्तरयोस्तु प्रथमस्य पर्वणः प्रथमस्वरो वैकल्पिक इति प्रदर्शनार्थं पर्वद्वयाभ्यासः । तदुक्तम्—स्तावे हविष उत्तरयोः प्रथमे (पु. सू. ९. १. ११.) इति ॥ २५ ॥ 5

धर्मविधर्मणोर्द्विपदाकारे दशमैः स्तोभैः प्रतिहारः ॥ २६ ॥

पवस्व सोम महान्त्समुद्रः (ग्रा. ११. ९. ४२९. १-२.) इत्यनयोर्द्वितीयं धर्मनिधनलिङ्गात् ॥

पवस्व सोम महे दक्षाय (ग्रा. ११. ९. ४३१. १-२.) इत्यनयोराद्यं विधर्म । ते च प्राजापत्ये । तयोर्द्विपदाकारं चतुष्पदाकारं चेति पक्षद्वयं 10 पुरस्तात् दर्शितम् । तत्र द्विपदाकारपक्षे धर्मणः औहोवेति स्तोभः पाद्द्वयस्य पुरस्तादृगन्ते च चतुश्चतुः प्रयुज्यते इति द्वादश स्तोभाः । तेषामाद्याश्चत्वारः प्रस्तावः । प्रथमः पादो निधनम् । ततश्चत्वार उद्गीथः । द्वितीयः पादो निधनम् । 13

---

2. O. after पादद्वयं प्रस्तावः । (p.109 L.9) resumes with अभ्यस्तो.

4. O. द्वयस्य for °द्वय.

5. B[1]. सौहविषं for स्तावे हविष ; HO. after इति adds:—वाकं पर्यूष्विति मध्यमम्.

6. A. °विधर्मणे for °विधर्मणोः.

8. H. अन्त्यं for द्वितीयं.

10. B[1]B[2]MS[1]S[2]. द्विपदाकारः for द्विपदाकारं ; B[1]B[2]MS[1]S[2]. चतुष्पदाकारः for चतुष्पदाकारं.

12. A. अन्ते for ऋगन्ते ; B[1]. प्रशम्यते, H. प्रसज्यते for प्रयुज्यते.

13. A. प्रथमपादे for प्रथमः पादो ; B[1]. om. निधनम् ।...दशमस्तोभः.

पुनश्चैकः स्तोभ उद्गीथः। एवं नव स्तोभा गताः। दशमस्तोभः प्रतिहारः। दशमैरिति बहुवचनम् अक्षरबहुत्वापेक्षया। तत स्तोभद्वयमुपद्रवः। ए ३। धर्मा २३४५ इति निधनम्। एवं विधर्मणोऽपि द्रष्टव्यम्॥ २६॥

अत्रैव मतान्तरमाह—

5 **षष्ठदशमैर्वा द्वौ चेत्॥ २७॥**

अनयोर्द्वौ चेत् प्रतिहाराविष्टौ तदा षष्ठदशमाभ्यां स्तोभाभ्यां प्रतिहारौ। अत्रापि बहुवचनं पूर्ववत्॥ २७॥

अथ चतुष्पदाकारपक्षे वदति—

**स्तोभविभाग्ये वा पञ्चाक्षरशः॥ २८॥**

10 अस्मिन् पक्षे पञ्चभिः पञ्चभिरक्षरैश्चत्वारि पदानि निधनानि। स्तोभा विभाग्याः ययोस्ते **स्तोभविभाग्ये**। तत्र धर्मण **औहोवेति** स्तोभः। प्रथमस्य पादस्य पुरस्तात् प्रयुज्यमानाश्चत्वारः प्रस्तावः। द्वितीयस्योद्गीथः। तृतीयस्य प्रतिहारः। चतुर्थस्य पुरस्तादुपरिष्टाच्च प्रयुज्यमाना उपद्रवः। एवं विधर्मणोऽपि॥ २८॥

15 **वाजिनां साम॥ २९॥**

**आविर्मर्याः** (ग्रा. ११. ९. ४३५. १.) इत्येतत् **वजिनां साम**। **वाजिनो अग्मन्निति** लिङ्गात्। तस्य वाजिन ऋषयः। **वाजिनां साम ब्रह्मा**
18 **रथचक्रेऽभिगायति** (तां.ब्रा. १८. ७. १२.) इति वाजपेये ब्राह्मणम्॥ २९॥

---

6. M. transp. चेत् after प्रतिहारौ and om. इष्टौ.
7. B[1]. om. अत्रापि...स्तो°.
8. HO. om. वदति.
9. H. पञ्चाक्षरः for पञ्चाक्षरशः.
10. A. om. स्तोभा; M. after निधनानि adds:— सन्ति; and H. अत एव; M. स्तोभ विभाग्य°, HO. स्तोभ विभाग्याः for स्तोभा विभाग्याः.
11. MB[1]. om. ते; M. तत्र धर्मौं, H. तद्धर्मं for तत्र धर्मणः.

## श्लोकानुश्लोके परिगाणेषु ॥ ३० ॥

ब्रह्माण इन्द्रम् (ग्रा.१२.१०.४३९.१-२.) इत्येते श्लोकानुश्लोके। श्लोकयता २३४५। श्लो २३४ काः इति निधनलिङ्गात्। तयोः प्रजापतिः ऋषिः। परिगाणेषु परिमात्सु मध्ये विनियोगः। तथा च महाव्रते ब्राह्मणम्—श्लोकानुश्लोकाभ्यां हविर्धाने उपतिष्ठन्त (तां.ब्रा.५.४.१०.) इति ॥ ३० ॥ 5

## उद्वंशपुत्रः। वाइप्रायगाथंगा १ या ३ ता ॥ ३१ ॥

प्र व इन्द्राय वृत्रहन्तमाय (ग्रा. १२. १०. ४४६. १.) इति उद्वंशपुत्रः प्राजापत्यः। वैश्वदेव इति केचित्। तस्य व्यक्षरः प्रस्तावः। उपात्तः प्रतिहारः। उवित्यस्य स्थाने इडित्यन्तर्निधनम् ॥ ३१ ॥ 10

## गूर्दः। शिवो भुवा २३ः ॥ ३२ ॥

अग्ने त्वन्नोऽन्तम (ग्रा. १२.११.४४८.१-४.) इत्येषामाद्यो गूर्दः। तस्य ऋषिः प्रजापतिः। पर्व प्रस्तावः। जारास्वरत्वात्। ता २३४ माः इत्यन्तर्निधनम्। हीषीस्वरत्वात्। उतत्राताशिवोभुवः इति च। निगदवर्तित्वात्। शिवोभुवा २३ः इत्यभ्यासः प्रतिहारः ॥ ३२ ॥ 15

## प्राजापत्यमतिच्छन्दसम्। अयंसहोहाइ ॥ ३३ ॥ 16

---

1. M. °गणेषु, H. °गानेषु for °गाणेषु.

12. H. om. एषामाद्यः.

13. H. om. तस्य…प्रस्तावः.

16. HO. माधुच्छन्दसं for अतिच्छन्दसं.

**अयं सहस्रमानवः** (ग्रा. १२. १२. ४५८. १-२.) इत्यनयोराद्य-
**मतिच्छन्दसं प्राजापत्यम्** । अत्र दशमेऽहनि ब्राह्मणम्—**पत्नीः संयाज्य**
**प्राश्च उदेत्ययं सहस्रमानव इत्यतिच्छन्दसाहवनीयमुपतिष्ठन्ति** (तां. ब्रा.
४. ९. १.) इति । अस्य प्राजापत्यत्वं शाखान्तरमूलम् । आर्षेयब्राह्मणे त्वेतत्
5 गोराङ्गिरसस्य सामेति श्रूयते ॥ ३३ ॥

## अग्निं होतोत्तरे बार्हस्पत्ये ॥ ३४ ॥

**अग्निं होतारम्** (ग्रा. १२. १२. ४६७. १-४.) इत्येषां तृतीयचतुर्थे
**बार्हस्पत्ये** बृहस्पतिना दृष्टे इति । तयोराद्यस्यावभृथे विनियोगः । उत्तरस्य
9 प्रवर्ग्योद्वासने इति ॥ ३४ ॥

इति श्रीवामनार्यसुतवरदराजविरचितायां दशतयीवृत्तौ
प्रतिहारसूत्रव्याख्यायां सप्तमः खण्डः ॥ ७ ॥

---

2. HO. माधुच्छन्दसं for अतिच्छन्दसं ; HA. पत्नी for पत्नीः ; B²B¹. संयोज्य for सयाज्य.

3. H. प्राश्चम् for प्राश्चः ; M. उदेत्यायं for उदेत्ययं.

5. M. गोराङ्गिरस°, H. गौराङ्गिरसस्य for गोराङ्गिरसस्य ; H. om. श्रूयते.

8. H. प्रवर्ग्योद्वासने for अवभृथे ; O. om. अवभृथे...आद्यस्य (p. 115 L. 4).

9. H. अवभृते for प्रवर्ग्योद्वासने ; M. after प्रवर्ग्योद्वासने adds :— विनियोगः.

# अष्टमः खण्डः

ऋषभाभीकयोः । उग्रं शा २३४ र्मा ॥ १ ॥

उच्चा ते जातमन्धसः (ग्रा. १२. १. ४६७. १-१३.) इत्येषां तृतीयम् ऋषभः पवमानः । चतुर्थमाभीकम् । तयोराद्यस्य ऋषिः प्रजापतिः । पर्व प्रस्तावः । उपात्तः प्रतिहारः ॥ 5

आभीकस्याङ्गिरस ऋषयः । आभीकं भवति । अभिक्रान्त्या अङ्गिरसस्तपस्तेपानाः शुचमशोचंस्त एतत् सामापश्यन् (तां. ब्रा. १५. ९. ८-९.) इति श्रुतेः । पादः प्रस्तावः । न्याय्यः प्रतिहारः ॥ १ ॥

गतनिधनं बाभ्रवम् । ऊ ग्रा ३९ हाइ ।
शर्मा ३ हाइ ॥ २ ॥ 10

तेषां षष्ठं बाभ्रवम् । गतनिधनम् इति विशेषणं ब्राह्मणे दर्शनादुपात्तम् । श्रूयते हि गतनिधनं बाभ्रवं भवति । गत्यै बभ्रुर्वा एतेन कौम्भ्यः (तां. ब्रा. १५. ३. १२-१३. ) इत्यादि । एस्थादिदमिति स्थितिवाचि निधनान्वयाद्यथा देवस्थानस्य स्थितनिधनत्वम् । उक्तं हि निदानकारेण — अथैतद्देवस्थानं स्थितनिधनमुतास्मिन् श्रीस्तिष्ठेत् (नि.सू. 15

---

4. B[1-2]HO. पावमानः for पवमानः ; O. after तयोराद्यस्य (p. 114. L.8) resumes ऋषिः ; MB²A. transp. ऋषिः after प्रजापतिः.

8. AB¹B²M. om. प्रतिहारः.

11. M. तेषु for तेषां.

13. H. दमिति, M. दिति for एस्थादिदमिति.

14. H. om. स्थिति ; B¹. भवाचु for स्थितिवाचि ; M. स्थिति° for स्थित°.

15. OHAMB¹B². निधनकारेण for निदानकारेण ; B¹. स्थिते for स्थित° ; B². उदास्तिश्रिस्, A. उदास्तिच्छ्रिस् for °मुतास्मिन् श्रीस्.

७. ४.) इति। एवं ग्वाभिरिति गमनवाचि निधनान्वयादस्य गतनिधनत्वम्। ग्वशब्दस्य च गमनवाचित्वम् अङ्गिरसो नः पितरो नवग्वा इत्यत्र नवग्वा इति पदं निब्रुवता भगवता यास्केन दर्शितम्—नवगतयोर्नवनीतगतयोर्वा (नि. ११. २. १९.) इति। अस्य पर्व प्रस्तावः। न्याय्यः सस्तोभः
5 प्रतिहारः ॥ २ ॥

शैशवम्। उग्रं२ श २३४ र्मा ॥ ३ ॥

तेषामष्टमं शैशवं शिशुना आङ्गिरसेन दृष्टमिति ॥ ३ ॥

आमहीयवम्। उग्रं२ शर्मा ॥ ४ ॥

तेषामन्त्यमामहीयवम्। अमहीयुना दृष्टमिति ॥ ४ ॥

आजिगम्। इन्द्रायापा ॥ ५ ॥

10 स्वादिष्ठया (ग्रा. १२. १. ४६८. १-९.) इत्येषामाद्यम् आजिगम्। आजिगस्तस्य ऋषिः। पादः प्रस्तावः चतुरक्षरो वा। चतुरक्षरो वा सुरूपाजिगैडसाकमश्वानाम् (पु. सू. १०. १०. ९.) इति वचनात् ॥ ५ ॥

आष्टमिकं सुरूपम्। छन्दोमपवमानप्रभृतीनां च
15 त्रिरात्राणां मध्यमेष्वहस्सु इन्द्रायपा २। इया २ इया ॥ ६ ॥

तेषां द्वितीयतृतीये सुरूपे प्राजापत्ये। तयोराद्यमाष्टमिकं दशरात्रस्याष्टमे-
17 ऽहनि विनियुज्यते सुरूपं भवति। पशवो वै सुरूपम् (तां. ब्रा. १४.

---

1. MB[1]. श्वाभिः, B[2]. श्वाभूः, A. श्वाभ्रम् for ग्वाभिः.
2. B[1]B[2]A. श्वशब्दस्य for ग्वशब्दस्य.
3. M. स्कन्देन, B[2]. भाष्करेण, A. भास्करेण for यास्केन.
7. B[1]B[2]MAS[1]S[2]. om. आङ्गिरसेन.
12. A. द्विरक्षरो वा सुरूप° for चतुरक्षरो वा सुरूप.
16. B[1]HO. om. सुरूपे; M. transp. सूरूपे after प्राजापत्ये.

११. १०-११.) इत्यादिना । किं च छन्दोमपवमानेऽन्तर्वसुः पराक इति ये त्रिरात्रास्तेषां मध्यमेष्वहस्सु तद्विनियुज्यते । तत्र छन्दोमपवमानस्य द्वितीयेऽहनि कल्पः—**अग्नेरर्कादुत्तराणि सुरूपप्रभृतीनि चत्वारि** (आ. क. ६. ८. २.) इति । अन्तर्वसोश्च **अथ यदेव छन्दोमपवमानस्य मध्यममहस्तदेतत्** (आ.क.६.९.२.) इति । पराकस्य च । **अग्नेरर्कादुत्तरे सुरूपभासे** (आ.क. 5 ६.९.४.) इति । तस्य चतुरक्षरो वा प्रस्तावः । उपात्तः प्रतिहारः । उत्तरस्यापि सुरूपस्य पूर्ववत् प्रस्तावः ॥ ६ ॥

अथास्य प्रतिहारं विनियोगनियमं चाह—

## इन्द्राय पौहो २ । इया नावमिकमन्यत्र ॥ ७ ॥

तदेतन्नावमिकं पूर्वोक्तेभ्यो विषयेभ्योऽन्यत्र प्रयुज्यते । तत्र नवमेऽहनि 10 ब्राह्मणम्—**सुरूपं भवति । यदेव सुरूपस्य ब्राह्मणम्** (तां.ब्रा. १५. ३. ८.) इति । तथा च छन्दोमपवमानस्योत्तरेऽहनि कल्पः—**ऋषभात् पवमानादुत्तराणि सुरूपं चादरासृचेडानां च संक्षार** (आ. क. ६. ८. ३.) इति । एवमन्यत्रापि द्रष्टव्यम् ॥ ७ ॥

## संहितम् । आं २३ इन्द्रा ॥ ८ ॥ 15

**स्वादिष्ठयान्त्यं संहितम्** । तस्य ऋषिः प्रजापतिः । संहित इति केचित् ॥ ८ ॥ 17

---

1. B[2]A. कंच for किंच ; B[2]AMS[2]. पवमानो° for पवमाने ; B[2]. वसु° for °वसुः ; H. पवमाने । प्रभृतीनां वान्तर्वसुः for पवमानेऽन्तर्वसुः ; S[1]. अन्तर्वसौ for अन्तर्वसु°.

5. M. om. च.

6. H. om. तस्य.

8. AB[1]B[2]S[1]S[2]HO. om. अस्य ; H. प्रतिहारः, M. प्रतिहार for प्रतिहारं ; S[1]. om. विनियोग°.

11. H. स्वरूपं...स्वरूपस्य for सुरूपं...सुरूपस्य ; O. after ब्राह्मणं adds :—भवति.

13. M. स्वरूपं for सुरूपं.

आशुभार्गवम् । विश्वादा १ धा २ ॥ ९ ॥

वृषा पवस्व धारय (ग्रा. १२. १. ४६९. १-९.) इत्येषां तृतीयम् आशुभार्गवम् । भृगुणा दृष्टं भार्गवम् ॥ ९ ॥

यौक्ताश्वे । औ हो हो हा इ । विश्वा ।

5 ऋक्पूर्वः परे ॥ १० ॥

तेषामष्टमनवमे यौक्ताश्वे युक्ताश्वेन दृष्टे इति । तयोराद्यस्य औ हो हो हाइ । वृषा इति द्व्यक्षरः प्रस्तावः । औ हो हो हाइ । विश्वा इति प्रतिहारः । ओइ । ज्वर आ इति निधनम् । द्वितीयस्य वृषा औ हो हो हाइ इति द्व्यक्षरः प्रस्तावः । ऋक्पूर्वः पर इति पूर्वयौक्ताश्वेयः प्रतिहारः स ऋगक्षरपूर्वः ।

10 परे यौक्ताश्वे प्रतिहार इत्यर्थः । यथा विश्वा औ हो हो हाइ इति ॥ १० ॥

यौक्ताश्वयोर्विनियोगव्यवस्थामाह—

पूर्वमनादेशे ॥ ११ ॥

यथा द्वितीयेऽहनि ब्राह्मणम्—यौक्ताश्वं भवति । युक्ताश्वो वाङ्गिरस तां. ब्रा. ११. ८. ७-८.) इत्यादि । द्वितीयं तु यत्रैवादिश्यते तत्रैव ग्राह्यम् ।

15 यथा अभिप्लवस्य द्वितीयेऽहनि वृषा पवस्व धारयेति गायत्रं च हाविष्मतं च

---

3. AB². om. भार्गवम्.

6. B¹. om. औहोहोहाइ...प्रस्तावः.

8. MH. om. इति after आ.

10. MAB¹B²S¹S². om. इत्यर्थः ; HB¹. before यथा add :—तद्.

11. AB². व्यवस्था कृता for व्यवस्थामाह.

14. B¹. आदृश्यते, HO. दृश्यते, M. अतिदिश्यते for आदिश्यते.

15. HOM. हाविष्कृतं for हाविष्मतं.

**यौक्ताश्वमुत्तरेषु यदुत्तरम्** (आ. क. १. ३. २.) इति। छन्दोमदशाहस्य च द्वितीयेऽहनि **वृषा पवस्व धारयेति गायत्रं च यौक्ताश्वं च सुरूपं च हरिश्रीनिधनं च आजिगं च श्वाशिरं च सौपर्णं सच्छन्दस्यं च यौक्ताश्वमृषभश्च पवमान** इति ॥ ११ ॥

सोमसाम । दा इवा वा इरा ३४ । हाउ ॥ १२ ॥ 5

**यस्ते मदो वरेण्य** (ग्रा. १३. १. ४७०. १-६.) इत्येषां द्वितीयं **सोमसाम**। तस्य चतुरक्षरः प्रस्तावः। उपात्तः प्रतिहारः ॥ १२ ॥

तदनादेशे ॥ १३ ॥

यथा प्रथमेऽहनि ब्राह्मणम्—**सोमसाम भवति। यथा वा इमा अन्या ओषधयः एवं सोम आसीत्** (तां. ब्रा. ११. ३. ९.) इत्यादि। 10
छन्दोमपवमानस्य प्रथमेऽहनि कल्पश्च—**आश्वादुत्तरे सोमसाम च रोहित-कूलीयं च** (आ. क. ६.८.१.) इति। यत्तु जागतं सोमसाम तस्य विघन एव विनियोग इत्युक्तम्। यत् पुनः **पुनानः सोम धारयेत्येषां** चतुर्थं तस्य **सच्छन्दस्यानुष्टभि च** (प्र. हा. सू. ९. १.) इति वक्ष्यति। अध्यर्धेडं तु सोमसाम सविशेषणमेव विनियुज्यते। यथा छन्दोमदशाहस्य पञ्चमेऽहनि 15
कल्पः—**असाव्यंशुर्मदायेति गायत्रं च संतनि चाध्यर्धेडं च सोमसाम गौषूक्तं** चेति। दशरात्रे सूत्रं च **सप्तमेऽहन्यग्नेरर्कोऽध्यर्धेडं च सोमसाम मौक्षस्य पूर्वयोः** इति ॥ १३ ॥ 18

---

1. O. om. द्वितीयेऽहनि.

3. AB[1]B[2]MS[1]S[2]. om. श्वाशिरं च; B[1]. संपर्णसं छन्दस्यं, A. सउपर्ण सच्छन्दस्य° (यौक्तश्वम्), H. सौपर्णश्च दस्यं च, MS[1]S[2]. सौपर्णं छन्दस्यं च for सौपर्णं सच्छन्दस्यं च.

10. B[1]. अमाः for अन्याः.

12. MB[1]. विघ्न एव for विघन एव.

14. H. कस्य सच्छन्दस्यस्य, S[1]S[2]MB[1]. तस्य च्छन्दसि for तस्य सच्छन्दस्य°.

17. S[1]S[2]O. सप्रथमे for सप्तमे°;

18. B[1]. विनियोगा for इति.

भासम् । दा१इवा २३ । पूर्वो वा द्व्यक्षरः ॥ १४ ॥

तेषां पञ्चमं **भासम्** । तस्य ऋषिरत्रिः । **भासं भवति** । इत्युपक्रम्य **तस्यात्रिर्भासेन तमोऽपहन्** (तां. ब्रा. १४. ११. १२-१४.) इति श्रुतेः । यान्तः प्रस्तावः । **यान्तो दाशस्पत्यभास** (पु. सू. १०.१०.१६.) इत्यादिवचनात् । द१इवा २३ इति प्रतिहारः । ध१सा २ इति वा ॥ १४ ॥

अध्यर्धेडं सोमसाम । दे२र१र२वावीरा २३ । हा२इ ॥ १५ ॥

तेषामेव षष्ठमिदम् । अस्याध्यर्धेडोपायाः स्थाने इट् इडेति निधनम् ॥ १५ ॥

क्षुल्लकवैष्टम्भम् । ह१राइरा १२ इती २३ ।

हो१ वा२ २ हा२इ ॥ १६ ॥

**तिस्रो वाच उदीरत** (ग्रा. १३. १. ४७१. १-६.) इत्येषां पञ्चमम् । तस्य विष्टम्भ ऋषिः ॥ १६ ॥

पाष्ठौहम् । कनौ २ । हु१वाइ । हो२ऽ ३ वा२ ३ ॥ १७ ॥

तेषामेवान्त्यं **पाष्ठौहम्** । तस्य ब्राह्मणम्—**पाष्ठौहं भवति । पष्ठवाड् वा एतेनाङ्गिरसः** (तां.ब्रा. १२. ५. १०-११) इत्यादि । हा२र ओ१ वा२ । ओ१ वा३ २१३१४१५१ इति निधनम् ॥ १७ ॥

---

6. M. अध्यर्धेड़ं for अध्यर्धेडं.

7. AB². अध्यर्धोपयास्थाने, H. अध्यर्धेडापयास्थाने, B¹. अध्यर्धोपायस्थाने for अध्यर्धेडोपायाः स्थाने ; M. अध्यर्धेड for अध्यर्धेड.

15. B¹. om. वाड् वा एतेन...च्यावनम् । (p, 121 L. 4).

इषोवृधीयम् । अ[2]र्कस्या[1]यो २ ॥ १८ ॥

**इन्द्रायेन्दो** (ग्रा. १३.१.४७२.१-८.) इत्येषामाद्यम् **इषोवृधीयम्** । तस्य ऋषिः प्रजापतिः । पर्व प्रस्तावः । न्याय्यः प्रतिहारः ॥ १८ ॥

च्यावनम् । नाइमा २३ हा ३४३ इ ।

न्याय्यो वा ॥ १९ ॥ 5

**असाव्यंशुर्मदाय** (ग्रा. १३.१.४७३.१-८.) इत्येषामष्टमं **च्यावनं** । च्यवनेन भार्गवेण दृष्टमिति ॥ १९ ॥

वैदन्वतम् । म[1]दाइषूसा[2] ३ । ई[2] ३ या[2] ३ ॥ २० ॥

**परि स्वानो गिरिष्ठाः** (ग्रा. १३. १. ४७५. १-६.) इत्येषामाद्यं **वैदन्वतं** विदन्वता भार्गवेण दृष्टमिति । तस्य पर्व प्रस्तावः । जारास्वरत्वात् । 10 उपात्तः प्रतिहारः ॥ २० ॥

तेषां तृतीयमुपादत्ते—

षुवा[4] । स[2]र्व[1]धाः । असा २ इ[2] ॥ २१ ॥

इदं च **वैदन्वतम्** । **एकं चेदार्षेयमुक्त्वा** (प्र. हा. सू. २. ४१.) इत्यादिवचनात् । उपात्तः प्रतिहारः ॥ २१ ॥ 15

द्व्यक्षरो वोभयतःस्तोभः ॥ २२ ॥

अथवा उत्तमपादादावुभयतःस्तोभो द्व्यक्षरः प्रतिहारः । तद्यथा ओ[1]इ । मदौ[2] । वा ३४३ ओ[2] २३४ वा[5] इति ॥ २२ ॥ 18

---

8. M. trans. ऋषिः after प्रजापतिः.

10. O. om. °दन्वता...उपा°.

त्र्यक्षरो वोभयतःस्तोभः ॥ २३ ॥

तद्यथा—ओइ । मदौ । वा ३४३ औ २३४ वा । षुवा । इति ॥ २३ ॥

तृतीयं वाक्षरं सस्तोभम् ॥ २४ ॥

यद्वा उत्तमे पादे तृतीयं वाक्षरं सस्तोभं प्रतिहारः । षूवा इति । तदेवं तृतीयस्य वैदन्वतस्य प्रतिहारे चत्वारः पक्षाः । तत्र चतुर्थपक्षाश्रये ऊहाम्नायः । षुवा इत्यस्योदूहकरणात् । पक्षान्तरेषु तु न चेत्समानपुरुषवचने ( ) इत्यादिवचनात् । प्रागुपायात् ( ) इति वचनाच्च । तस्योदूहो न कार्यः ॥ २४ ॥

अथ चतुर्थं वैदन्वतं स्तोभप्रतीकेनोपादत्ते औ हो इ ॥ २५ ॥

एतत् सस्तोभपदविभाग्यम् । अस्य ए इडेति निधनम् । तदेतानि त्रीणि वैदन्वतानि । स्वारं निधनवदैडमिति । तेषां षष्ठेऽहनि आर्भवे गायत्रादूर्ध्वं ब्राह्मणेन वैदन्वतानि भवन्तीति ॥ २५ ॥

विहितानां छान्दसपाठक्रमेण प्रयोगे प्राप्ते आह—

---

1. MH. om. त्र्यक्षरो वोभयतस्तोभः.

6. $AB^1B^2$. om. तत्र; HO. च तत्पक्षाश्रये for चतुर्थपक्षाश्रये.

7. $B^1$. °कारणात् for °करणात्; H. पक्षान्तरौ for पक्षान्तरेषु; HM. Om. तु.

12. $B^1$. ऐडे त्रिणिधनम्, for ए इडेति निधनम्; $B^2B^1A$. om. अस्य.

13. HO. षडहे for षष्ठेऽहनि.

14. H. om. °नि भवन्तीति ... निधनवता (p. 123, L. 2).

## न्याय्ये नानुपूर्व्यम् ॥ २६ ॥

**गायत्रेण स्तुत्वा निधनवता स्तुवन्ति** (तां. ब्रा. ७. ३. ११.) इति श्रुतेः। गायत्रात् परं निधनवद्वैदन्वतं प्रयोज्यम्। ततः स्वारम्। यदि ऐडं प्रयुज्येत ततो दीर्घवैदन्वतयोः स्वारयोः संनिपातात् जामि स्यात्। **स्वारात्तु वैदन्वतात् परमैडमि**त्यनेन न्यायेन एषामानुपूर्व्यक्रमो बोद्धव्य इत्यर्थः। त्रिककुब्दशरात्रादावप्यनेनैव न्यायेनैषां क्रमो योज्यः ॥ २६ ॥ 5

## और्णायवे। स्वानैर्या २३ ती ॥ २७ ॥

**परि प्रिया दिवः कविः** (ग्रा. १३. १. ४७६. १-२.) इत्येते **और्णायवे**। ऊर्णायुना गान्धर्वेण दृष्टे इति। तयोर्द्वयोरप्ययं प्रतिहारः ॥ २७ ॥

## उत्तरमनादेशे ॥ २८ ॥ 10

यथा चतुर्थेऽहनि ब्राह्मणम्—**और्णायवं भवति। अङ्गिरसो वै सत्रमासत** (तां. ब्रा. १२. ११. ९-१०.) इत्यादि। यथा त्रिककुब्दशरात्रे चतुर्थेऽहनि कल्पः—**परिप्रिया दिवः कविरिति गायत्रं चौर्णायवं च** (आ.क.८.३.५.) इति। आद्यं तु यत्रैवादिश्यते तत्रैव भवति। यथाभिप्लवस्य चतुर्थेऽहनि **परिप्रिया दिवः कविरिति गायत्रं चौर्णायवं च यदीनिधनम्** 15 (आ. क. १. ५. ५.) **इति** ॥ २८ ॥ 16

---

1. M. °पूर्वम् for °पूर्व्यम्.

3. HO. गायत्र्याः for गायत्रात्; H. after यदि adds : वा.

4. AB¹B² MS². प्रयुज्यते for प्रयुज्येत; MAB². वैदन्वतदीर्घयोः for दीर्घवैदन्वतयोः; M. जामित्वात्, AB². जामी स्यात् for जामि स्यात्.

5. अनुपूर्वं क्रमेण बोद्धव्यम् for आनुपूर्व्यक्रमो बोद्धव्यः; H. बोध्यते for बोद्धव्यः.

9. H. This manuscript concludes with : ऊर्णायुना.

15. B¹M. यदि for यदी.

शाम्मदम् । वायुमारो ३१२३ ॥ २९ ॥

पवस्व देव आयुषक् (ग्रा. १३. २. ४८३. १-२.) इति अनयोर्द्वितीयं शाम्मदम् । तस्य ऋषिराङ्गिरसः शम्मत् । यान्तः प्रस्तावः । न्याय्यः प्रतिहारः ॥ २९ ॥

5 अचिक्रदद्वार्षाहरं परिगाणेषु ॥ ३० ॥

अचिक्रदद् वृषाहरिः (ग्रा. १४. ४. ४९७. १.) इत्येतत् वृषाहरिणा दृष्टं वार्षाहरम् । तत् परिगाणेषु एव विनियुज्यते । यथोक्तं परिषिच्यमानेऽप उपस्पृश्य वार्षाहरम् इति श्येनादिषु त्वमेतद्धारय इति । वार्षाहरयोः स्तोत्रसामत्वेन विनियोग इति भावः ॥ ३० ॥

10 वार्शम् । पा॰ता३मा३ । ई३या३ ॥ ३१ ।

आ ते दक्षं मयोभुवः (ग्रा. १४. ४. ४९८. १-३.) इत्येषामाद्यं वृशेन जानेन दृष्टं वार्शम् । तस्य पर्व प्रस्तावः । न्याय्यः स्तोभान्तः प्रतिहारः । इड् इडेति निधनम् ॥ ३१ ॥

वैरूपम् । वा आ१ नाया २ ॥ ३२ ॥

15 अध्वर्यो अद्रिभिः सुतम् (ग्रा. १४. ४. ४९९. १-३.) इत्यनयोराद्यम् इन्द्रस्य वैरूपम् । ग्राम्यारण्यकयोर्वैरूपयोरनुच्छन्दसं विनियोगः ॥ ३२ ॥

द्व्यक्षरो वा ॥ ३३ ॥

18 उत्तमपादादौ द्व्यक्षरो वा प्रतिहारः । पुना २३ इति ॥ ३३ ॥

3. M. शम्मदः for शम्मत्.

4. B[1]. om. प्रतिहारः.

12. B[2]MA. ज्ञानेन for जानेन; M. स्तोभः for स्तोभान्तः.

16. O. om. वैरूपयोः.

इहवद्दार्ढच्युतम् । उत्तरयोर्द्व्यक्षरौ ॥ ३४ ॥

अर्षा सोम द्युमत्तम (ग्रा. १४. ४. ५०३. १-३.) इत्येषामाद्यं साम इहवद्दार्ढच्युतं दृढच्युता दृष्टमिति । तस्य द्व्यक्षरः पादो वा प्रस्तावः । द्व्यक्षरो वा संस्कृतिदार्ढच्युतयोः (पु. सू. १०. १०. ८.) इति वचनात् । द्वितीयतृतीयपादयोराद्यौ द्व्यक्षरौ प्रतिहारौ । इहकाराः षण्णिधनानि ॥ ३४ ॥ 5

अयासोमीयम् । मान्दान आयेत् ॥ ३५ ॥

अया सोमसु कृत्यया (ग्रा. १४. ४. ५०७. १.) इत्येतत् । तस्यायास्य ऋषिः । आयास्यं चायासोमीयं वा (आ. ब्रा. ५. ४. ११) इति श्रुतेः ॥ ३५ ॥ 9

इति श्रीवरदराजविरचितायां दशतयीवृत्तौ
प्रतिहारसूत्रव्याख्यायामष्टमः खण्डः ॥ ८ ॥

---

2. O. om. साम.
3. M. om. वा.
5. A. आद्यम् । for आद्यौ.
6. MAB². आया° for अया.

# नवमः खण्डः

**सच्छन्दस्यं सोमसामानुष्टुभि चाभिषेचनीयगोसवयोः**

**उत्सो २ दा१इबा २॥ १ ॥**

**पुनानः सोम धारय** (ग्रा. १४. ५. ५११. ४.) इत्येषां चतुर्थं
5 **सोमसाम** सच्छन्दसि बृहत्यां प्रयुज्यते । यथा छन्दोमवद्दशरात्रे षष्ठेऽहनि
कल्पः—**कण्वरथन्तरस्य लोके सोमसाम** (आ. क. ८. १०. २.) इति
अनुष्टुभि विच्छन्दसि च प्रयुज्यते । **अभिषेचनीयगोसवयोः** । तत्राभिषेचनीये
कल्पः--**पुरोजिती वो अन्धस इति वाभ्रचश्वं च वैतहव्यं च सोमसाम
च त्रासदस्यवं च** (आ.क.४.८.६.) इति । गोसवोऽप्यभिषेचनीयस्यैवातिदेशः ।
10 अन्येषां तु सोमसाम्नां विषयव्यवस्था पूर्वमेव दर्शिता ॥ १ ॥

**साद्यस्क्रेष्वायास्यम् । उत्सोदेवा२ ३१ः ॥ २ ॥**

तेषां पञ्चमम**आयास्यम्** आयास्येनाङ्गिरसेन दृष्टमिति । तस्य द्व्यक्षरः
प्रस्तावः । न्याय्यः प्रतिहारः । तदेव साद्यस्क्रेषु विनियुज्यते । न तु
त्रिणिधनम् । तत्र प्रथमे साद्यस्क्रे कल्पः—**पवस्वेन्द्रमच्छेति सफायास्ये**
15 (आ. क. ३. ५. ५.) इति ॥ २ ॥

**उद्धत्प्राजापत्यम् । उ१त्सा २ हो १ इ ।**

**दा २३ इवो२ ३ ॥ ३ ॥**

18 तेषां सप्तममिदम् ॥ ३ ॥

---

7. B[1]B[2]AMOS[1]S[2]. विच्छन्दस्यपि for विच्छन्दसि च.

8. O. सोमसाम चाच्छत्रास° for सोमसाम च त्रास°.

9. MO. गोसवे for गोसवः.

आयास्यम् । एकार्थे त्रिणिधनम् । आरा ३४।
औ हो वा । उत्सा ३४। औहोवा ॥ ४ ॥

तेषामष्टमं **त्रिणिधनमायास्यम्** । तस्य वान्तः प्रस्तावः । उपान्तौ द्वौ प्रतिहारौ । हीषीस्वराणि त्रिणिधनानि । तच्चैकार्थे विनियुज्यते । सायस्केभ्योऽन्यत्र यत्रैकेनायास्येनार्थो भवति तत्रेत्यर्थः । तथा चाभिप्लवस्य षष्ठेऽहनि कल्पः— **मृज्यमानः सुहस्त्येत्यैडं चौक्ष्णोरन्ध्रं त्रिणिधनं चायास्यम्** (आ. क. १. ७. ३.) इति ॥ ४ ॥

अथ यदि द्वाभ्यामायास्याभ्यामर्थः तदा कथमित्याह—

उभे चेदनुपूर्वम् ॥ ५ ॥

यद्युभे **चेद्** आयास्ये विनियुज्येते तदा द्वयोरप्यायास्ययोः ऐडत्रिणिधनयो-रनुपूर्वं प्रयोगः । स्थानतो व्यवस्थाया उक्तत्वात् । तत्र दाशरात्रिके द्वितीयेऽहनि ब्राह्मणम्—**आयास्ये भवतः । आयास्यो वाङ्गिरसः** (ता. ब्रा. ११. ८. ९-१०.) इत्यादि । आभिप्लविके कल्पश्च—**परीतोषिञ्चतासुतम् इति माधुच्छन्दसं च भर्गश्च यशो वायास्ये** (आ. क. १. ३. ३.) इति । एवमन्यत्रापि द्रष्टव्यम् ॥ ५ ॥

कण्वरथन्तरम् । उत्सोदा २३४ इवाः ॥ ६ ॥

तेषां नवमं **कण्वरथन्तरम्** । तस्य कण्व ऋषिः । एकारादि निधनम् । **प्रसोम देव वीतये** (ग्रा. १४.५.५१४) इत्यत्र सर्वबृहतीकारः **ककुबुत्तरा बृहती** इति । पक्षद्वयमूहाम्नायसिद्धम् ॥ ६ ॥

4. $S^1B^2$. निधनानि for त्रिणिधनानि.
8. O. तदानीम् for तदा कथम्.
10. OA. om. चेत्.
13. M. om. च.
18. M. सर्वत्र for सर्व.
19. A. पक्षे for पक्ष°.

## साप्तमिकमायास्यम् । उत्साऔ३ हो ॥ ७ ॥

तेषां दशममायास्यम् । तच्च साप्तमिकम् । तथा च दशरात्रस्य सप्तमेऽहनि आयास्यं भवति तिरश्चीनिधनं प्रतिष्ठाया इति । छन्दोमदशाहस्य च कल्पः—पुनानः सोम धारयेति सोमसाम च कण्वरथन्तरं च पौरुमद्गं च गौङ्गवं च द्विनिधनं चायास्यम् (आ. क. १०. १०. ३.) इति । तस्य पादो वान्तः प्रस्तावः । उत्सा औ ३ हो इति प्रतिहारः । षा ३ सी २ । ण्या ३ या २३४५ः इति द्वे निधने । गीतं च निधनस्वरम् इति वचनात् ॥ ७ ॥

## सदोविशीयम् । उत्सोदा १ इवा २ः स्तोभान्तः ॥ ८ ॥

एकादशं सदोविशीयम् । तस्य ऋषिः प्रजापतिः । वान्तः प्रस्तावः । उत्सोदा १ इवा २ः । ओहा इत्यादि वान्तः प्रतिहारः ॥ ८ ॥

## हावो प्लवः ॥ ९ ॥

तेषां चतुर्दशं हावो इत्यादिकं साम वसिष्ठस्य प्लवः । सस्तोभः पादः । विभाग्यश्चायम् । ए ३ । अतिविश्वानिदुरितेत्यादि तिधनम् । अस्य सखाय आ निषीदतेत्युष्णिक्षु गीतिविशेष ऊहसिद्धः ॥

---

4. O MAB[1]B[2]. om. कल्पः.

5. AB[1]B[2]. आयास्ये for आयास्यम्ः.

6. M. वान्तः पादप्रस्तावः for पादो वान्तः प्रस्ताव ; S[1]S[2]. om. उत्सा ... स्तोभान्तः (L. 10.).

10. M. ओहा । ओहाए । औहोइ । औहोवा for स्तोभान्तः ।

11. O. before प्रस्तावः adds :—पादः.

14. M. सस्तोभः पदविभाग्यः ; O. सस्तोभपदविभाग्यः for सस्तोभः पादः । विभाग्यश्चायम् ; B[1]. after पादः adds:— प्रति प्र.

फुल्कारश्चाह—**प्लवे वारवन्तास्तिस्रः तृतीये पादे। द्वितीये तूष्णिक्षु। चतुरक्षराः प्रथमा द्व्यक्षरे परे** (पु. सू. ८. ७. १४-६.) इति। तत्र प्रथमः पादः एका विधा। द्वितीयो द्वितीया। तृतीयस्यादितोऽष्टाक्षरं तृतीया। ततश्चतुरक्षरं चतुर्थी। तेन हाहो इत्यादिकस्य स्तोभस्य तस्यास्तस्या विधायाः पुरस्तादुदाहरणम् ॥ ९ ॥ 5

रौरवम्। उत्सोदेवोहिरा २३ हाइ।
ओहा ३ उवा ॥ १० ॥

तेषां पञ्चदशमं **रौरवम्। तरणिरित्सिषासति** इत्यत्र **नेमिन्तष्टेवसा उहा** इति पाठो वैकल्पिकः। तदुक्तम्—**रवउगतिः** (पु. सू. ९. २. १.) इति ॥ १० ॥ 10

यौधाजयम्। उत्सा २ः ॥ ११ ॥

तेषामेव षोडशं **यौधाजयम्। इन्द्रस्य यौधाजयम्। युधाजेर्वाङ्गिरसस्य युधाजीवस्य वा विश्वामित्रस्य** (आ. ब्रा. ५. ५. १.) इति। हीषीस्वराणि त्रिणिधनानि। अत्र सूत्रम्—**त्रिरात्रेषु च यौधाजयस्यैकाक्षराणि निधनानि इति। तथा चाहीनेषु प्रसोम देववीतये इति यौधाजयमधीमहे** इति ॥ ११ ॥ 15 16

---

2. AM. चतुरक्षरं for चतुरक्षराः.

3. M. om. तत्र; B[1]. एको विधा, M. एकविधः; for एका विधा; M. द्वितीयः for द्वितीया; B[1]. तृतीया स्यादितो° for तृतीयस्यादितो.

4. M. तृतीयः for तृतीया; MS[1]. तत्र for ततः; M. चतुर्थः for चतुर्थी; S[2] सस्तोभस्य for स्तोभस्य; M. तस्यास्तस्यापि द्विविधायाः, तस्मात् तस्या विधायाः for तस्यास्तस्या विधायाः; AB[2]. तस्यापि धायाः; B[1]. तस्यापि विधायाः for तस्या विधायाः; O. om. तस्यास्तस्याः.

8. AB[1]B[2]. after पञ्चदशमम् adds: अग्नेः; O. इत्यादि for इत्यत्र.

## अच्छिद्ररयिष्ठयोस्त्रयः प्रस्तावसदृशाः ॥ १२ ॥

यौधाजयादनन्तरे **परीतोषिञ्चता सुतम्** (ग्रा. १४.५.५१२.१-१५.) इत्येषामाद्ये। **अच्छिद्ररयिष्ठे द्वे। वसिष्ठस्य वा** (आ. ब्रा. ५. ५. २.) इति। तयोः **प्रस्तावसदृशाः त्रयः** प्रतिहाराः। तद्यथा अच्छिद्रस्य। **अभिसोमास** (ग्रा. १५. ५. ५१८.) इत्यत्र पर्व प्रस्तावः। अग्निदूतास्वरत्वात्। **या २३४ वा** इत्यन्तर्निधनम्। **पवन्तेमदियम्मदाम्** इति च। **पवन्तेम** इति प्रतिहारः। मादामित्यन्तर्निधनम्। **समुद्रस्याधिविष्टपे मनीषीणा** इति च। **समुद्रस्या** इति प्रतिहारः। **षीणाः** इत्यन्तर्निधनम्। **मत्सरासो मदच्युता** इति च। **मत्सरासा** इति प्रतिहारः। **च्युता** इत्यन्तर्निधनम्। एवमुत्तरयोरपि द्रष्टव्यम्। रयिष्ठस्यापि **अभीनोवाजसात**मित्यादिषु प्रस्ताव-प्रतिहाराः निगदवर्तीनि चान्तर्निधनानि अच्छिद्रवद् द्रष्टव्यानि। **औहोवे**त्यादेर्हा-उवान्तस्य स्तोभस्य प्रतिपादमाहरणम्। इद् इडेति निधनम्। **पवस्व वाजसातये** इत्यत्र **पवमानमहित्वने**त्यस्य पादस्याभ्यासस्वरविकल्पः प्रदर्शनार्थः। तदुक्तम्—**अष्टेडरयिष्ठयोः हित्वना दीदिहिस्वरा** (पु. सू. ९. १. ५.) इति ॥ १२ ॥

## आभीशवे। दा॑ २३४ धा॑। सु २३४ षा। स्तोभान्तौ ॥ १३ ॥

---

8. O. om. षीणाः इत्यन्तर्निधनम्।

9. O. om. अन्तर्.

10. AB²B¹. om. द्रष्टव्यम्; S¹S². प्रस्तावः। प्रतिहार for प्रस्ताव-प्रतिहाराः.

12. AB¹B². °पादनम् for °पादम्.

13. O. द्विस्वर° for अभ्यासस्वर°; S¹S². अभ्यासः for अभ्यास°; B¹. प्रदर्शनार्थम् for प्रदर्शनार्थः.

14. M. पवमानमहित्वाना for हित्वना.

तेषां पञ्चमषष्ठे **आभीशवे** अभीशुना दृष्टे इति। तयोः पूर्वस्य **दा ३ २३४ धा ५। हा २ ३ हाइ २** इत्येकः प्रतिहारः। **सू ३ २३४ षा ५। हाइ** इति द्वितीयः। उत्तरस्य **दा ३ २३४ धा ५। हा २ ३ हाइ २** इति एकः। **सू ३ २३४ ष ५। हा २ ३ हाइ २** इति द्वितीयः॥ १३॥

अनयोर्विषयं व्यवस्थापयति— 5

## पूर्वं नवमतन्त्र एव॥ १४॥

यथा नवमेऽहनि ब्राह्मणम्—**आभीशवं भवति। यदेवाभीशव-**मित्यादि। नवमतन्त्रादन्यत्र तूत्तममेवाभीशवमित्युक्तं भवति। यथा चतुर्थेऽहनि **तवाहं सोम रारणे**त्येता अधिकृत्य ब्राह्मणम्—**आभीशवं भवत्यह्नो धृत्यै** (तां. ब्रा. १२. ९. १५.) इति। अभिप्लवस्य चतुर्थेऽहनि कल्पश्च— 10
**परीतोषिञ्चता सुतम् इति पृश्नि चाथर्वणं चाभीशवं च यौधाजयं च।** (आ. क. १. ५. ३.) इति॥ १४॥

## द्वादशं माण्डवम् १५॥

**परीतोषिञ्चता सुतम्** (ग्रा. १५.५.५१२.१-१५.) इत्येषां **द्वादशं माण्डवम्।** तच्च सस्तोभपदविभाग्यम्॥ १५॥ 15

## हाउ हाउ हाउ वा प्रतोदगोष्ठौ॥ १६॥

**हाउहाउहाउवे**त्येतत्स्तोभोपक्रमाणि चतुर्दशादीनि चत्वारि सामानि सन्ति। तेषामाद्ये चतुर्दशपञ्चदशे प्रतोदगोष्ठौ। **संख्यानादेशे वर्गाद्य**मित्युक्त- 18

---

2. AB[1]B[2]. om. सू. २३४ षा। हाइ इति द्वितीयः। उत्तरस्य दाऽ २३४ धा।…हा ३ हाइ इति द्वितीयः.

7. B[2]B[1]AS[2]. यथा – (AS[2]. यदा- for यथा) भीशवस्य ब्राह्मणं भवति, S[1]. यदाभीशवस्येति for यदेवाभीशवमित्यादि.

8. S[1] उत्तरमेव for उत्तममेव.

16. AB[1]B[2]. om. वा.

17. MS[1]S[2]. om. हाउ…प्रतोदगोष्ठौ; AB[1]B[2]. om. हाउ…इत्युक्तत्वात्.

त्वात् । द्वौ च स्तोभविभक्त्यौ पदनिधनौ । तत्र प्रतोदस्य प्रजापतिः काश्यपो वा द्रष्टा । ऊपास्थाने इडेति च निधनम् । गोष्ठस्याङ्गिरस ऋषिः । इहा इडेत्येते च निधने ॥ १६ ॥

आश्वम् । जानाओ २३४ वा । नापाओ २३४ वा ।
5 सदोवन इति च ॥ १७ ॥

आसोम स्वानो अद्रिभिः (ग्रा. १४. ५. ५१३. १-४.) इत्येषामाद्यमाश्वम् । तस्यर्षिरश्वः । ओवान्तः पादः प्रस्तावः । उपात्तौ द्वौ प्रतिहारौ । द्वितीयः पादः तृतीये च पादे अन्त्यमष्टाक्षरमित्यन्तर्निधने । निगदवर्तित्वात् । अस्योत्सर्गिणामयने सूत्रकारेण विनियोगो दर्शितः । **एतद्वै त्रिवृत्स्तोभमसृक्षतेति**
10 **बहिष्पवमानं गायत्रं गायत्र्यामाश्वमैडं बृहत्या**मिति । तत्र चेदमूह्यं साम । ऊहपाठे अध्ययनाभावात् ॥ १७ ॥

अग्नेस्त्रिणिधनम् । ओ२ शोः पा २३४ या ।
ओच्छाको २३४ शाम् इति च ॥ १८ ॥

**प्रसोम देववीतये** (ग्रा. १४. ५. ५१४. १-५.) इत्येषां पञ्चानामाद्यम् **अग्नेस्त्रिणिधनम्** । तस्य पर्व प्रस्तावः । उपात्तौ द्वौ प्रतिहारौ । हीषीस्वराणि
15 निधनानि ॥ १८ ॥

द्विर्हिंकारं वामदेव्यम् । अच्छाकोशा ०
17 मधौहो ३ । हिम्मा २ ॥ १९ ॥

---

1. M. तावपि, S[1]O. तौ च for द्वौ च; O. कश्यपः for काश्यपः.
8. M. निधनं for निधने.
9. S[1]. तच्चैकत्रिक, O. तद्वैकत्रिक° for एतद्वै त्रिवृत्°.
15. AB[2]S[1]. before निधनानि add :—त्रीणि.

तेषां तृतीयमिदम्। **द्विहिंकारमिति** अन्वर्थविशेषणम्। कयावामदेव्या-दस्य व्यावृत्त्यर्थम् ॥ १९ ॥

**उत्सेधनिषेधयोर्यथाग्नेस्त्विणिधने स्तोभान्तौ ॥ २० ॥**

द्विहिंकारादनन्तरे सामनी **उत्सेधनिषेधौ**। **अङ्गिरसां चोत्सेधनिषेधौ** (आ. ब्रा. ५. ५. ४.) इति। तयोरुत्सेधस्य वान्तः प्रस्तावः। **अग्नेस्त्विणिधने** यथास्थितौ प्रतिहारौ। **अ३श्शो२र३ः पा४या आ१च्छा२र३ को४शा५म्** इति तथा-भूतावेवात्र **स्तोभान्तौ** प्रतिहारौ। ऊपास्थाने इडेत्यन्तर्निधने। निषेधस्य पादः प्रस्तावः। प्रतिहारौ पूर्ववत्। इडेत्यन्तर्निधने ॥ २० ॥

**वैष्णवे परिधीर॰ रतिता २ ॰।**

**परा१औ२र ३ हो२। अनुपूर्वम् ॥ २१ ॥**

**तवाहं सोम रारण।** (ग्रा. १५.५.५१६.१-५.) इत्येतेषां प्रथमद्वितीये **वैष्णवे** विष्णुना दृष्टे इति। तयोः प्रथमस्य पर्व प्रस्तावः। **परिधीर॰रतिता-२ ॰** इति प्रतिहारः। इद् इडेति निधनम्। उत्तरस्य **तवा॰५र**। **तवा४** इति प्रस्तावः। **अभ्यस्तो व्यक्षर** (पु.सू. १०.११.२.) इत्यादिवचनात्। **परा१ औ ३ हो** इति प्रतिहारः। अनयोश्छन्दोमदशाहे पञ्चमेऽहनि सहविनियोगः उक्तः। **सोम उष्वाणस्सोतृभिः इति मानवं चाभीशवं च वैष्णवे च तवाहंसोम-रारणेत्येषां प्रथमे** (आ. क. १०. ९. २.) इति। तत्रानुपूर्वं प्रयोगः ॥ २१ ॥

1. AB[2]. द्वितीयं for तृतीयं; M. वामदेव्यस्य for वामदेव्यात्.
2. M. om. अस्य; B[1]. अस्याः for अस्य.
4. M. om. द्विहिंकारात् ... अग्नेस्त्विणिधने; AB[2]. सामनि for सामनी.
7. O. °श्रुतौ for °भूतौ; S[2]. स्तोभान्ते for स्तोभान्तौ; M. °निधन for निधने.
8. S. निधनम् for निधने.
15. M. om. सह.

औक्ष्णोरन्ध्रे । पवमा । ना । औ ३ हो ।
पवमाना ३ । हा ३ हा । अनुपूर्वम् ॥ २२ ॥

**मृज्यमानः सुहस्त्य** (ग्रा. १५. ५. ५१७. १-८.) इत्येषां प्रथमसप्तमे **औक्ष्णोरन्ध्रे** उक्ष्णोरन्ध्रेण काव्येन (काप्येन ?) दृष्टे इति । तयोः
5 प्रथमस्य पर्व प्रस्तावः । **पवमा । ना । औ ३ हो** इति प्रतिहारः । उत्तरस्य वान्तः प्रस्तावः । **पवमाना ३ । हा ३ हा** इति प्रतिहारः । अनयोश्च यत्र सहविनियोगः तत्राविशेषोक्तावनुपूर्वं प्रयोगः । यथा **दाशरात्रिके षष्ठेऽहनि औक्ष्णोरन्ध्रे भवतः** इति । यत्र तु विशेषोक्तिस्तत्रानुपूर्वं न भवत्येव । यथा **परोक्षपृष्ठ्यषडहे विपरिहरत्यौक्ष्णोरन्ध्रे** इति ॥ २२ ॥

10 वाजिजित् । पावा २ हो । माना २ हो ॥ २३ ॥

तेषामेवान्त्यं **वाजिजित्** । प्रजापतिः कुत्स ऋषिः । षडक्षरः प्रस्तावः । उपात्तः प्रतिहारः । **वाजीजिगी ३ वा ५ १** इति निधनम् ॥ २३ ॥

स्वःपृष्ठमाङ्गिरसम् । मत्सरासो २३ ॥ २४ ॥

**अभिसोमास आयवः** (ग्रा. १५. ५. ५१८. १-८.) इत्येषां पञ्चमं
15 **स्वःपृष्ठमाङ्गिरसम्** । स्वःशब्दोऽस्य मध्ये स्थित इति **स्वःपृष्ठम्** । अस्य

---

4. O. om. उक्ष्णोरन्ध्रेण ;.. अहनि (L. 7).

5. S¹S². om. प्रथमस्य.

7. S². सत्रसामसु यत्र विनियोगः for यत्र सहविनियोगः ; S¹. विनियोगः for प्रयोगः.

10, 11. O. वाज° for वाजि°.

11. M. सूर्यः for कुत्स.

14. O. om. पञ्चमं ; O. अत्र for अस्य.

अङ्गिरस ऋषयः । ह्रीषीस्वरे द्वे निधने । पूर्वस्या ऊपायाः स्थाने स्वरिति निधनम् । उत्तरस्या इडेति । विपरीतं वा । तथा च सूत्रम्—**स्वःपृष्ठे च पूर्व उत्तर इति गौतमधानंजय्यौ** इति । तद् एवं चत्वारि निधनानि । तथा च ब्राह्मणम्—**चतुर्निधनमाङ्गिरसं भवति । चतूरात्रस्य धृत्यै** (ता. ब्रा. १२. ९. १८.) इति ॥ २४ ॥ 5

औशनम् । अश्वन्नत्वावाजिनम्मा ।
जया २३० ताः । इति न्याय्यो वा ॥ २५ ॥

**प्र तु द्रव** (ग्रा. १५. ६. ५२३. १-५) इत्येषामन्त्य**मौशनम्** उशनसा काव्येन दृष्टमिति । तस्य पर्व प्रस्तावः । जागस्वरत्वात् । तृतीयः पादो **न्याय्यो वा** प्रतिहारः । **इनो राजन्नि**त्यत्रोद्गीथादौ पाठविकल्पप्रदर्शनार्थं 10 पर्वद्वयस्याभ्यासः । यथोक्तं विकल्पप्रकरणे **शने राजन्प्लुवते** (पु. सू. ९. १. १६.) इति ॥ २५ ॥

हाउ हाउ हुप् वाराहम् ॥ २६ ॥

**प्रकाव्यमुशनेव ब्रुवाणः** (ग्रा. १५. ६. ५२४. १-४.) इत्येषामन्त्यं **हाउहाउ । हुप्** इत्यादिकं **वाराहं** वराहेण दृष्टम् । तच्च संस्तोभपद- 15 विभाग्यम् ॥ २६ ॥

अङ्गिरसां संक्रोशः ॥ २७ ॥ 17

---

1. O. °स्वरिति निधनम् for °स्वरे द्वे निधने; M. trans. पूर्वस्याः after ऊपायाः.

2. M. after इडेति adds :—निधनम्.

3. MAB[1]B[2]. S[1]S[2]. तथा च for तद्.

10. O. उद्भिदादौ for उद्गीथादौ; AB[2]. °विकल्पः प्रदर्शनार्थः; S[1]S[2]M. °विकल्पप्रदर्शनार्थः for °विकल्पप्रदर्शनार्थं.

वाराहादनन्तरं **तिस्रो वाच ईरयति प्र वह्निः** (ग्रा. १५. ६. ५२५. १-३.) इत्येषां प्रतीकेनाधीयमानानामाद्यम् **अङ्गिरसां संक्रोशः**। सोऽपि सस्तोभपदविभाग्यः। तस्य च कात्स्न्येनाध्ययनमूहसिद्धम् ॥ २७ ॥

## उहुवाइ। हाइ। उहुवेति वासिष्ठे ॥ २८ ॥

5 **अस्य प्रेषा हेमना पूयमानाः** (ग्रा. १५. ५२६. ) इत्यत्र प्रतीकेन पञ्च सामान्यधीयन्ते। कात्स्न्येन च षष्ठम्। तेषां द्वितीयतृतीये वासिष्ठे। तद्यथा **उहुवाइ अस्या ३४ औहोवा** इत्येकम्। **हाइ। उहुवा। देवा ३४ औहोवा** इत्यपरम्। ते च सस्तोभपदविभाग्ये ॥ २८ ॥

अनयोर्विनियोगव्यवस्थामाह—

## 10 अनुपूर्वमष्टमनवमयोः ॥ २९ ॥

समूढरूपिणि द्वादशाहे छन्दोमानधिकृत्य कल्पकारेणोक्तम्—**माध्यंदिनान्त्यानि त्वेषां सर्वाणि त्रैष्टुभानि जगतीषु कल्पयेत् इति ह स्माह शाण्डिल्यो वाशहं वासिष्ठम्** (क्षु. क. ३. ११.) इति। तत्र द्वितीयतृतीययोश्छन्दोमयोर्दशरात्रस्थाष्टमनवमभूतयोरेते अनुपूर्वं प्रयोज्ये। अन्यत्र त्वनयोर्विशेषो-
15 पादानेनैव विनियोगः ॥ २९ ॥

## इहवद्द्वितीयेऽहन्यनादेशे ॥ ३० ॥

तेषां षष्ठमिहवद्वासिष्ठं सस्तोभपदविभाग्यम्। तच्च द्वितीये **एवाहन्यनादेशे**
18 ग्राह्यम्। तथा च ब्राह्मणम्—**वासिष्ठं भवति। वसिष्ठो वा एतेन वैडवःस्तुत्वा**

---

7. AB¹B². एकः for एकम्.
8. M. स्तोभविभाग्ये, A. स्तोभपदविभाग्ये for सस्तोभपदविभाग्ये.
14. AMB². प्रयोज्यते for प्रयोज्ये ; AMB¹B². om. त्वनयोः.
17. M. om. तेषां ... अनादेशे.
18. S¹S². विनियुज्यते for ग्राह्यम् ; B¹B². वैढवः for वैडवः.

(तां. ब्रा. ११.८.१३-४) इत्यादि । अन्यत्र त्वनादेशे विशेषो दर्शित एव । इन्द्रक्रतु वासिष्ठं नवमतन्त्रे । इदावासिष्ठमन्यत्र (             ) इति । अनादेश इति वचनं द्वितीयादह्नोऽन्यत्र अस्य विशेषोक्तिसद्भावात् । यथा समूढे पृष्ठ्ये षडहे षष्ठेऽहनि अया पवा पवस्वैना वसूनि इति इहवद्वासिष्ठमन्त्यं माध्यंदिनस्य (आ. क. १.९.३) इति ॥ ३० ॥ 5

हाउजनज्जनित्रम् । समूढेऽपि च समूढरूपिणि ॥ ३१ ॥

हाउजनदित्यादिकं सोमः पवते जनिता मतीनाम् (ग्रा. १५. ६. ५२७. १-४) इत्येषां तृतीयं जनित्रम् । वसिष्ठ ऋषिः । सस्तोभपदविभाग्यम् । तच्च समूढे पृष्ठ्यादौ समूढरूपिणि च विनियुज्यते । तत्र समूढे पृष्ठ्ये छन्दोमदशाहे च चतुर्थेऽहनि कल्पः—सोमः पवते जनिता मतीनामिति जनित्रमन्त्यं माध्यंदिनस्य (आ. क. १. ९. १) इति । समूढरूपिणि च । अथ यान्येव पृष्ठ्यस्य समूह्यमानस्य माध्यंदिनाद्यानि तान्यत्रार्भावात् परिहरेत् । सस्तोत्रीयाणीति । व्यूढसमूढरूपिभ्यामन्यत्र तु नहि वश्चरमं चन (ग्रा. ६. १. २४१.१-२) इत्येते जनित्रे । अनुपूर्वमौपशदनवसप्तदशयोः पूर्वमतोऽन्यत्र (प्र. सू. ५. १२) इत्युक्तम् ॥ ३१ ॥ 10 15

अभित्रिसम्पा ॥ ३२ ॥ 17

---

3. S[1]. वचनात् for वचनम् ; M. संभवात् for सद्भावात् ; AB[1]B[2]. मूढे, MO. समूढ for समूढे.

4. O. पृष्ठ्यः for पृष्ठ्ये ; M. om. षष्ठेऽहनि.

9. B[1]. om. एषां तृतीयं ; B[1]. अन्त्यं माध्यंदिनस्येति for वसिष्ठ ऋषिः ... पृष्ठ्यादौ.

10. B[2]. om. विनियुज्यते । ... समूढरूपिणि च (L. 12).

13. O. om. अथ ; M. °दिनान्त्यानि for °दिनाद्यानि ; M. आर्भवान्त्यानि for आर्भवात्.

14. MAB[1]B[2]. om. तु ; MAB[1-2]. O. om. व्यूढ°.

15. AO. औपदशनव for औपशदनव.

**अभित्रिपृष्ठं वरुणं वयोधाम्** (ग्रा. १५. ६. ५२८. १) इत्येषा वसिष्ठस्य **सम्पा** सस्तोभपदविभाग्या ॥ ३२ ॥

## कुत्सस्याधिरथीयम् प्रसेनाद्यम् ॥ ३३ ॥

**प्र सेनानी शूरो अग्रे रथानाम्** (ग्रा.१५.७.५३३.१-३) इत्येषामाद्यं **कुत्सस्याधिरथीयम्** । सस्तोभपदविभाग्यम् । आद्यग्रहणं विस्पष्टार्थम् । **संख्यानादेशे वर्गाद्यम्** (प्र. हा. सू. २. ८) इत्येव सिद्धत्वात् ॥ ३३ ॥

## प्र ते धारा इत्यतस्त्रीणि वैश्वज्योतिषाणि ॥ ३४ ॥

**प्र ते धारा मधुमतीरसग्रन्** (ग्रा. १५. ७. ५३४. १), **प्र गायताभ्यर्चाम देवान्** (ग्रा.१५.७.५३५.१), **प्रहिन्वानो जनिता रोदस्योः** (ग्रा. १५. ७. ५३६. १) इत्येतानि त्रीणि **वैश्वज्योतिषाणि** । तेषां मध्यमं पदविभाग्यम् । इतरे सस्तोभपदविभाग्ये । एषां च विशेषोपादानेनैव विनियोगः ॥ ३४ ॥

## दाशस्पत्यम् । हन्ताइरक्षो । वारा इवस्कृ । ण्वन्निति च स्तोभान्तौ ॥ ३५ ॥

**इन्दुर्वाजी** (१५. ७. ५४०. १-४) इत्येषां तृतीयं **दाशस्पत्यम्** । तस्य ऋषिर्दशस्पतिः । यान्तः प्रस्तावः । द्वौ प्रतिहारौ । **हन्ताइरक्षो बाधाताइपाउ । वा ३ । हाउवा ३** इत्येकः । **वाराइवस्कृ । ण्वन्वृजनाउ ।**

---

1. MAB¹B² एतत् for एषा.

2. MAB¹B². °विभाग्यम् for विभाग्या.

5. M. om. सस्तोभपदविभाग्यम्.

11. AMB¹B². एषां च, S¹S². तेषां for एषां.

वा ३। हाउवा ३ इत्यपरः। या २३४५। ती २३४५दम्। जा २३४५ इति त्रीणि निधनानि ॥ ३५ ॥

## दीदिही श्नौष्टम्। तस्य तृतीयं सस्तोभम् ॥ ३६ ॥

दीदिहीत्यनेन निधनेनोपलक्षितम् अया पवा पवस्वैना वसूनि (ग्रा. १६. ७. ५४१. १-३) इत्येषामाद्यं श्नौष्टम्। तस्य श्नुष्टिराङ्गिरस ऋषिः। औहोहाइ। अयोहाइ इति प्रस्तावः। यौक्ताश्वैडायास्यत्रैशोक (पु. सू. १०. ११. १) इति वचनात्। ब्रह्मश्रियस्येत्यादिकः तृतीयः पादः स्तोभान्तः प्रतिहारः ॥ ३६ ॥

इति श्रीवामनार्यसुत-वरदराजविरचित-दशतयीवृत्तौ
प्रतिहारसूत्रव्याख्यायां नवमः खण्डः ॥ ९ ॥

---

2. A. त्रिणिधनानि for त्रीणि निधनानि.
4. S[1]S[2]. before दीदिहि, add एऽ३ ; O. एतत्° for अनेन.

# दशमः खण्डः

## कार्तयशम् । अयश्वानश्श्नथा १ इष्टा ३ ना ॥ १ ॥

पुरोजिती वो अन्धसः (ग्रा. १६. ८. ५४५. १-६) इत्येषां तृतीयं कार्तयशम् । तस्य ऋषिः कृतयशाः । पुरोहाहाउ इति प्रस्तावः ।
5 हाउकारान्तः सन्तनि (पु. सू. १०. १०. २०) इत्यादि वचनात् । उपायाः स्थाने हम इति निधने कार्ये । हेति निधनमुपयन्ति (तां.ब्रा. १४.५.२२) इति ब्राह्मणात् । तत्र सूत्रम्—कार्तयशे च त्रयो विकल्पाः । दयित्वेहं दयित्वावेहं दयित्वेहाम् । एवमेवोत्तरस्मिन् निधने (ला. श्रौ. ७. १०. १३-१४) इति । उत्तरस्मिन् निधने घजिह्वियाहम् इत्यादि विकल्पत्वं
10 द्रष्टव्यमित्यर्थः ॥ १ ॥

## औध्र्वसद्मनम् । सखायोदाइ ॥ २ ॥

तेषां चतुर्थम् औध्र्वसद्मनम् । तस्य ऋषिः ऊर्ध्वसद्मा । सुवृक्तिभिरित्यादि निधनम् । अत्र त्रिणिधनं भवति (तां. ब्रा. ९. १. १४.) इति ब्राह्मणं व्याचक्षाणेन निदानकारेण बहून् पक्षान् उपन्यस्य सिद्धान्तितम् ।
15 यथासामाम्नायमेवोपेयुः । अथापि यथासामाम्नायमेवैतत् । त्रिणिधनं भवति इति शाण्डिल्यायनो यत्तिस्रो निधनमात्रा भवन्ति (नि. सू. ८. १. ५) इति ॥ २ ॥

## श्यावाश्वम् । ष्टा २३४ ना ॥ ३ ॥

19 तेषां पञ्चमं श्यावाश्वम् । श्यावाश्वेनार्चनानसेन दृष्टमिति ॥ ३ ॥

---

15. B[1-2]HM. साम्नायम् for सामाम्नायम् ; O. अथापि यथाम्नायम् for यथा सामाम्नायम्.

19. B[1]B[2]A, अर्चनानशेन for अर्चनानसेन.

## आन्धीगवम् । साखा३२ उवा ॥ ४ ॥

तेषामेव अन्त्यम् आन्धीगवम् । तस्य ऋषिः अन्धीगुः । त्वे अपश्वानश्श्नथिष्टन इत्यन्तर्निधनम् । निगदवर्तित्वात् ॥ ४ ॥

## क्रौञ्चानि ॥ ५ ॥

आन्धीगवादनन्तराणि अयं पूषा रयिर्भगः (ग्रा. १६.८.५४६.१-३) इत्येतानि त्रीणि क्रौञ्चानि । क्रुञ्चा दृष्टानीति । तेषामाद्यं विभाग्यम् । अत्र हि येषां साम्नामार्षेयमात्रमुपादीयते न तु प्रतिहारः तानि परिसामव्यतिरिक्तानि सामानि विभाग्यानीति मर्यादा । सूत्रकारश्चैतत् विभाग्येषु पठति । क्रौञ्चत्वाष्ट्री-सामानि स्वारवाङ्निधनानि ( ) इति ॥ ५ ॥ 5

अस्य विनियोगविषयं व्यवस्थापयति— 10

## प्रथममाष्टमिकं सप्तधान्यत्र ॥ ६ ॥

प्रथमं क्रौञ्चमष्टमेऽहनि अभी नो वाजसातमम् (ऊ. गा. द. ११६) इत्यस्मिंस्तृचे विधीयते । क्रौञ्चं भवति । यदेव क्रौञ्चस्य ब्राह्मणं यद् द्वितीयेऽहनि (तां. ब्रा. १४. ११. ३०) इति । अष्टमादन्यत्र सप्तधा सप्तसु स्थानेष्वित्यर्थः ॥ ६ ॥ 15

तान्येव स्थानानि दर्शयति— 16

---

6. M. after तेषां, adds एव.

8. A. क्रौञ्चम् for क्रौञ्च°.

9. A. साम्नी स्वारवर्ण, B². °सामानि स्वारं वाङ्, ML. °सामानि स्वारवन्° for °सामानि स्वारवाङ्.

10. O.S¹. before अस्य, adds यथा.

12. S¹. अषष्ठे for अष्टमे,

**छन्दोमपवमानेऽन्तर्वसौ चतुर्वीरे षष्ठ आहीनिके सप्तमे त्रैककुभे छन्दोमदशाहस्य द्वितीयेऽहनि विराट्संपन्ने षोडशिसाम ॥ ७ ॥**

छन्दोमपवमाने त्रिरात्रे द्वितीयेऽहनि कल्पः—**यज्ञायज्ञीयात् पूर्वाण्यासितं च कौत्सं च शुद्धाशुद्धीयं च रयिष्ठम्** (आ. क. ६. ८. २.) इति । **अन्तर्वसौ** च । अथ यदेव छन्दोमपवमानस्य मध्यममहस्तदेतदिति । **चतुर्वीरे** च । द्वितीयेऽहनि **अयं पूषा रयिर्भग इति आसितं च क्रौञ्चे द्वे । वृषा मतीनां पवते इति चतुरिडः पदस्तोभोऽन्त्यः** (आ. क. ७. २. ५) इति । अत्र चाजाम्यर्थं प्रथमोत्तमे क्रौञ्चे विपरिहर्तव्ये । पूर्वेष्वपि अहीनस्थानेषु अजाम्यर्थं ग्रहणम् । तथा अहीनानामृतुषडहादीनां संबन्धिनि षष्ठेऽहनि प्रथमं विनियुज्यते । यथोक्तम्—**औदलमासितं च त्वाष्ट्रीसामाविक्लृप्तं चतुर्थमहस्त्वाष्ट्रीसामक्रौञ्चमेते स्वराः । पृष्ठ्याः गौरीवितलोक** (आ. क. ७. १२. १.) इति । त्रिककुब्दशरात्रसंबन्धिनि च सप्तमेऽहनि **पुरोजिती वो अन्धस इति क्रौञ्चं गौतमं यज्ञायज्ञीयम्** (आ. क. ८. ६. ५) इति । तथा मध्ये पृष्ठ्यसंबन्धिनि छन्दोमदशाहस्य द्वितीयेऽहनि **अयं पूषारयिर्भग इति गौरीवितं च ऐडं च कौत्सं भर्गश्चासितं च यद्वाहिष्ठीयक्रौञ्चे एतेषामेव प्रथमोत्तमे** (आ. क. १०. ६. ५) इति । पुरस्तात् पृष्ठ्यसंबन्धिनस्तु छन्दोमदशाहस्य

---

8. $B^1B^2$O. चतुरिड° for चतुरिडः

9. $AB^2$. अपि for वि° ; $B^1$. om. वि° ; O. अहः, $AB^1B^2$. हि, $S^1S^2$. अभिहित° for अहीन°.

10. O. after अजाम्यर्थं adds :—प्रथमं प्रथमस्य.

11. $B^1B^2$. om. यथोक्तम् ; $AB^1B^2$M. om. च ; M. ह्याविष्कृतं for अविक्लृप्तं.

12. M. पृष्ठस्य, $OS^1S^2$. पृष्ठचस्य for पृष्ठ्याः ; O. om. °वितलोक ... गौरीवितं (L. 15).

13. M. om. च ; $AB^1B^2$. om. सप्तमेऽहनि.

15. $S^1$.पृष्ठ्यावलम्बसंबन्धिनि, $S^2$. पृष्ठे संबन्धिनि for पृष्ठ्यसंबन्धिनि.

17. $S^1$.संबन्धिनि तु ; $S^2$. संबन्धिनि सकृत् for संबन्धिनस्तु.

द्वितीये यत् क्रौञ्चं विधीयते अयं पूषा रयिर्भग इति गौरीवितं च भर्ग-श्चासितक्रौञ्चे इति तदुक्तमेव । यदि हि प्रथमं स्यात् ततः स्वारयोरासितक्रौञ्चयोः संनिपाताज्जामि स्यात् । तथा विराट्संपन्ने द्वादशाहे षष्ठेऽहनि प्रथमं क्रौञ्चं षोडशि-साम भवति । स्वारत्वात् । तथा च सूत्रम्—स्वारप्रायाणि षोडशिसामानि (ला.श्रौ.सू. १०.२.५) इति । तत्र कल्पः—अथापराण्यहानि सर्वाण्येव स्युः षोडशीनि । आसितं त्वाष्ट्रीसामाविक्लप्तं चतुर्थमहस्त्वाष्ट्रीसाम क्रौञ्च-मेतानि स्युः षोडशिसामानि आनुष्टुभेषु तृचेषु ऐन्द्रेषु हरिवत्सु सामान्येषु (क्षु. क. ३. २) इति ॥ ७ ॥

अथ द्वितीयस्य क्रौञ्चस्य विनियोगव्यवस्थां प्रतिहारं चाह—

सकृद्योग्यम् । ओइवियरव्या २३ द्रो॑ ॥ ८ ॥

द्वितीयं क्रौञ्चं सकृदेकस्मिन्नेव स्थाने विनियुज्यते । ततस्तत्रैव सकृद्योग्य-मित्यर्थः । तच्च स्थानं ब्रह्मवर्चसकामे कथं प्रयोक्त[व्यम् इति] । तत्र कल्पः—ब्रह्मवर्चसकामस्य स्वादिष्टया मदिष्टयेति गायत्रं संहितं सत्रासाहीयं त

---

1. O. om. भर्गः.

2. M. आसितं च for आसितक्रौञ्चे ; A. उत्तमम् for उक्तम् ; O. यदिति for यदि हि.

4. AB[1]B[2]MS[1]S[2]. om. तथा ; AB[2]. स्वारप्रायायै, O. स्वारप्रायाणे, S[1]. स्वारप्रायाणे हि, S[2]. स्वारप्रायै for स्वारप्रायाणि ।

6. S[1]S[2]. षोडशिसामानि for षोडशीनि.

7. A. हरिवत्सुधामान्येषु, HM. हरिवतः सायान्येषु for हरिवत्सु सामान्येषु.

9. M. अस्य for अथ ; O. after क्रौञ्चस्य, adds व्यवस्थां ; B[1]B[2]A. विनियोगस्य स्थानं for विनियोगव्यवस्थां ; B[1]H. परिहारं for प्रतिहारं.

11. O. यतस्तत्रैकं for ततस्तत्रैव सकृत् ; O. एकं for एव and om. सकृत्.

12. AB[1]B[2]S[2]. तत्र प्रयोगकल्पः, S[1]. अथ प्रयोगकल्पः, M. कथं प्रयोगकल्पः for कथं प्रयोक्तव्यं तत्र कल्पः.

13. HMB[1]B[2]A. ताः for त.

एकर्चाः । ऐडं कौत्सं तिसृषु । पुरोजिती वो अन्धस इति श्यावाश्व-
मेकस्यां क्रौञ्चमेकस्याम् । अयं पूषेति [यद्] द्वितीयमौदलमेकस्याम् ।
आन्धीगवं तिसृषु । साकमश्वम् एवाह्यसि वीरयुरिति सौभरम् । इन्द्रं
विश्वा अवीवृधन्निति नार्मेधम् । दशास्तूयमाना गायत्र्यस्सप्ततिः
5 स्तूयमानाः । समानमितरत् ज्योतिष्टोमेन । तस्य संपदेकविंशति-
श्चतुरक्षराण्युक्थानां ब्रह्मसाम्नो लुप्यन्ते । तावत् कौत्सक्रौञ्चाभ्यां च
नार्मेधाच्चातिरिच्यते तत्संपन्नम् (क्षु. क. १. ५) इति । अत्र हि
गायत्र्यां ब्रह्मसाम (तां. ब्रा. ८. १०. १) इति ब्राह्मणवचनात् विहितस्य
एवाह्यसि वीरयुर् (ऊ.गा.प्रा.२२) इति सौभरस्योक्थ्यानां ब्रह्मसाम्नो वयमुत्व
10 (ऊ. गा. द. १६) इति सौभरस्य न्यूनानामक्षराणां पूरणार्थमेतद्योग्यमिति भावः ।
अस्य पर्वद्वयं प्रस्तावः । अग्निं दूताभ्यस्ता मध्यमक्रौञ्चस्य (पु. सू. १०.
११. ३) इति वचनात् । स्तोभादिर्न्याय्यः प्रतिहारः ॥ ८ ॥

अत्रोत्तमस्य विषयव्यवस्थामाह—

## उत्तमं स्वयोन्यन्यत्र प्रायणीयात् ॥ ९ ॥

15 उत्तमं क्रौञ्चं स्वयोनि भवति । अयं पूषेत्येषां स्वयोनिर्यस्य तत्तथोक्तम् ।
16 यथाभिप्लवस्य द्वितीयेऽहनि अयं पूषा रयिर्भग इति गौरीवितं च क्रौञ्चं च

---

2. $AB^1B^2S^1S^2$. om. कौञ्चमेकस्याम्.

4. O. दश स्तूयमानाः, M. दशास्त्वयमानाः for दशास्तूयमानाः ; M. सप्त for सप्ततिः ; M. गायत्व्याः for गायत्र्यः.

6. $B^1$. °साम्ना, O. सामेन for °साम्नो ; O. लुप्यते for लुप्यन्ते.

7. $B^2$. संबन्धम् for संपन्नम्.

8. O. द्वितीयस्य for विहितस्य.

9. $S^1S^2$. उक्थानां for उक्थ्यानां ; O. °साम्नां प्राकृताद्वयम्, $S^1$. °सामत्वाद्वयम्, $S^2$. °साम्नोर्वयम् for °साम्नो वयम्.

10. O. सौभरन्यूनानाम्, $S^1S^2$. सौभरस्योनानाम् for सौभरस्य न्यूनानाम्.

13. M. om. अत्र ; $MAB^1B^2S^1S^2$. विषयम् for विषयव्यवस्थाम्.

15. AM. स्वयोनिः for स्वयोनि ; M. om. तत् ; $B^1$. अथ for तथा.

16. $S^2MS^1O$. om. द्वितीयेऽहनि ; $AB^1B^2$. before अयं, add अस्य.

(आ. क. १. ३. ५) इति । यथा वा साकमेधत्रिरात्रस्य द्वितीयेऽहनि **अयं पूषा रयिर्भग इति आसितं क्रौञ्चं भर्ग** (आ. क. ४. ४. ५) इति । यथा वाधीतं चतुर्वीरच्छन्दोमदशाहयोश्च । किं सर्वत्रैव स्वयोनि? नेत्याह—**प्रायणीयाच्चतुर्विंशादन्यत्र** । प्रायणीये तु **पुरोजिती वो अन्धस इति गौरीवितं च क्रौञ्चं च** (आ. क. १. १. ५) इत्यस्वयोनावपि विधीयमानं क्रौञ्चमुत्तममेव वेदितव्यम् । मध्येनिधनानुग्रहार्थमित्यर्थः ॥ ९ ॥

तस्य प्रतिहारमाह—

## तस्यैष एव स्तोभः ॥ १० ॥

**वियख्ययाद्रो** इत्येतावन्मात्रमित्यर्थः । **षा२३४ तौ** इत्यन्तर्निधनम् । हीषीस्वरत्वात् । तृतीयश्च पादो निगदवर्तित्वात् ॥ १० ॥

## त्वाष्ट्रीसाम । पवाइत्वा३० तो३ । दाइवान् गच्छा३० तुवा३ः ॥ ११ ॥

**सुतासो मधुमत्तमाः** (ग्रा. १६.८.५४७.१-६) इत्येषामाद्यं **त्वाष्ट्रीसाम** । तस्य त्वाष्ट्र्य ऋषयः । पर्व प्रस्तावः । उपान्तौ द्वौ प्रतिहारौ ॥ ११ ॥

## द्व्यक्षरौ वा ॥ १२ ॥

**पवाइ— दाइवान्** इत्येतौ वा द्व्यक्षरौ प्रतिहारौ । **ए३ । दिन आ । ए३ । क्षरन्ना । ए३ । मदाआ ।** इति त्रीणि निधनानि । **गीतं च निधनस्वर**मिति वचनात् । तथा चैतत् त्रिणिधनं त्वाष्ट्रीसामेत्युच्यते ॥ १२ ॥

---

3. OS[1]S[2]. दर्शितं for अधीतं ; AMB[1]B[2]S[1]S[2]. om. नेत्याह.

4. S[1]. चतुर्वीरात् for चतुर्विंशात्.

5. M. अस्य योनौ for अस्वयोनौ.

10. AB[1]B[2]. om. हीषीस्वरत्वात्.

11. S[1]S[2]O. पवाइत्वाऽ ३ । दाइवान् गच्छाऽ ॥ for पवाइत्वा ३० तो । दाइवान् गच्छा ३० तुवा ३ः ॥

18. M. om. एतत्.

19

६र र २ १
देवान्गच्छा ॥ १३ ॥

तेषां द्वितीयस्योपादानमेतत्। इदमूर्ध्वेडं त्वाष्ट्रीसाम। अस्य द्वितीयपादान्ते द्व्यक्षरं निधनम्। हीषीस्वरत्वात्। तृतीयश्च पादोऽन्तर्निधने ॥ १३ ॥

३र र १ ३ ५
देवा ३ न्होइ। गच्छो २३४ हा ॥ १४ ॥

5 तेषां चतुर्थमिदमाष्कारणिधनं त्वाष्ट्रीसाम। अस्य हाउकारान्तः प्रस्तावः। उपात्तः प्रतिहारः ॥ १४ ॥

अनभ्यासं वा ॥ १५ ॥

अथवा अभ्यासवर्जितमुत्तमं पदं प्रतिहारः। अभ्यासात् प्रागित्यर्थः ॥ १५ ॥

स्वारे ॥ १६ ॥

10 तेषां षष्ठसप्तमे **स्वारे** त्वाष्ट्रीसन्नी। ते च विभाग्ये ॥ १६ ॥

अथैषाम् एकार्षेयाणां विनियोगव्यवस्थां क्रमेणाह—

आद्यं तृतीये ॥ १७ ॥

तृतीयेऽहनि ब्राह्मणम्—**त्वाष्ट्रीसाम भवति। इन्द्रं वा अक्ष्यामयिणम्** (तां. ब्रा. १२. ५. १९) इत्यादि। तत्तेषामाद्यं त्रिणिधनमेव
15 वेदितव्यम्। मध्ये निधनानुग्रहार्थमजाम्यर्थं चेति ॥ १७ ॥

स्वारयोश्च पूर्वम् ॥ १८ ॥

17 तृतीयेऽहनि स्वारं त्वाष्ट्रीसाम विधीयमानं **स्वारयोः** पूर्वमेव विज्ञेयम् ॥

---

2. M. द्वितीयस्य for द्वितीय°.

8. AB[1]B[2]. om. निधनम्। हीषीस्वरत्वात्; MH. °निधनम् for °निधने.

14. HM. तत्रैषाम् for तत्तेषाम्.

17. S[1]S[2]. before तृतीये, add इत्येवम्। and O. तृतीय एव। M. ज्ञेयम् for विज्ञेयम्.

## उत्तरं पञ्चमे ॥ १९ ॥

एवं **पञ्चमेऽहनि स्वारयोरुत्तरम्** एव। उभयोरप्युदाहरणम्— **ऋतुषडहादिषु औदलमासितं त्वाष्ट्रीसामाविक्लप्तं चतुर्थमहस्त्वाष्ट्रीसाम क्रौञ्चमेते स्वराः पृष्ठ्यस्य गौरीवितलोके** (आ. क. ७. १२. १) इति। तत्र स्थानतो व्यवस्था। यथा तृतीयपञ्चमयोरह्नोः स्वारत्वाष्ट्रीसाम्नी अनुपूर्वं प्रयुज्येते। एवं छन्दोमदशाहस्य तृतीयेऽहनि यत् स्वारं त्वाष्ट्रीसाम विधीयते **सुतासो मधुमत्तमा इति गौरीवितं च साध्रं च श्यावाश्वं च त्रीणि च त्वाष्ट्रीसामानि ऐडं स्वारं त्रिणिधनम्** (आ.क.१०.७.५) इति तत्स्वारयोः पूर्वमेव। पञ्चमे तु विशेषोक्त्यैवोत्तरं विहितम्। **पवस्व वाजसातये इति गौरीवितं च ऋषभश्चशाक्करस्त्वाष्ट्रीसाम च यद् द्व्यनुतोदम्** (आ. क. १०. ९. ५) इति ॥ १९ ॥

## सप्तमे चाहनि छन्दोमदशाहस्य चतुर्वीरायुष्कामयोश्च ॥ २० ॥

स्वारयोरुत्तरमित्येव। छन्दोमदशाहस्य पुरस्तात् पृष्ठ्यसंबन्धिनः **सप्तमेऽहनि स्वारं** त्वाष्ट्रीसाम विहितम्। **पुरोजिती वो अन्धसः इति गौरीवितं च कार्तयशं च त्वाष्ट्रीसामनी स्वारं चाष्कारणिधनं च** (आ.क.११.६.४) इति। **तत्राभ्याघात्यसामानो हि छन्दोमा** (तां. ब्रा. १४. ९. ३०) इति श्रुतेरुत्तरमेव भवति ॥

अथ चतुर्वीरस्य तृतीयेऽहनि कल्पः— **सुतासो मधुमत्तमा इति त्वाष्ट्रीसामनी स्वारे अन्तरान्धीगवम्** (आ. क. ७. ३. ५) इति। **आयुष्कामषडहस्य**

---

1. O. उत्तमं for उत्तरं.
6. O. °दशाहयोः for °दशाहस्य.
7. OS[1]. पुरोजिती वो अन्धसः for सुतासो मधुमत्तमा.
10. S[1]S[2]. शाक्वर for शाक्वरः ; M. om. च.
12. M. om. चतुर्वीरा° ... छन्दोमदशाहस्य (L.12).
13. S[1]. संबन्धिनि for संबन्धिनः.
16. S[1]S[2]. अभ्यासात् for अभ्याघात° ; S[1]M. श्रुत्या for श्रुतेः ; O, after श्रुतेः, adds द्व्यनुतोदम्.

तृतीयेऽहनि कल्पः—**सुतासोमधुमत्तमा इति त्रीणि त्वाष्ट्रीसामान्यैडं मध्ये स्वारे अभितः** (आ. क. ७. १२. ३) इति। तत्र तृतीये **स्वारयोश्च पूर्वमिति** वचनात् चतुर्वीरायुष्कामयोरुत्तरमिति वचनाच्च स्वारयोरनुपूर्वं प्रयोगः ॥

जामदग्न्यचतूरात्रादिषु तृतीयेऽहनि चातुर्वीरस्योत्तरस्य त्वाष्ट्रीसाम्नः
5 स्थानेऽभ्यासवतस्त्वाष्ट्रीसाम्नो **लोके त्रिणिधनं त्वाष्ट्रीसाम** (आ. क. ७. ५. ३) इति वचनेन त्रिणिधनस्य निधानात् एवं व्यवस्थितम् ॥ २० ॥

## विराट्संपन्ने षोडशिसाम ॥ २१ ॥

**स्वारयोः पूर्वमुत्तरं पञ्चम** इत्यपेक्ष्यते। तथा च तत्र कल्पः— **अथापरण्यहानि** (क्षु. क. ३. २) इत्यादि। यद्येवं पूर्वोत्तरसाहचर्यात्
10 **स्वारयोश्च पूर्वमुत्तरं पञ्चम** (प्र. हा. सू. १०. १८-१९) इत्येताभ्यां सामान्यावगतयोरेव विनियोगव्यवस्थोक्तेति शङ्क्येत। मैवं शङ्का। षोडशिन्यपि सैव व्यवस्थेति प्रतिपादनार्थमिति सूत्रम् ॥ २१ ॥

## ऐडमतोऽन्यत्र ॥ २२ ॥

अतोऽन्यत्राविशेषोक्तावैडमेव त्वाष्ट्रीसाम भवति। यथा संसर्पस्य
15 चतुर्थेऽहनि **पुरोजिती वो अन्धस इति निषेधः श्यावश्वं त्वाष्ट्रीसाम**
16 (आ. का. ७. ६. ४) इति। यथा वा त्रिककुब्दशरात्रस्याष्टमेऽहनि **परित्यं**

---

1. O. त्रिणिधन° for त्वाष्ट्री°.
4. S[1]S[2]. जामदग्न° for जामदग्न्य°; O. दश° for चतु°.
5. S[1]. अभ्याघातस्य, S[2]. अभ्यासवति for अभ्यासवतः.
6. S[1]S[2]O. पूर्वमेव स्थितम् for एवं व्यवस्थितम्.
8. O. पूर्वंस्वारयोः, S[2]. पूर्वे स्वारयोः, for स्वारयोः ; O. उत्प्रेक्षते for इत्यपेक्षते.
9. O. after यद्येवं, adds किमर्थमुच्यते.
10. M. सहार्थ° for सामान्य°.
11. O. शङ्कितषोडशिस्थानगतयोरपि for शङ्का। षोडशिन्यपि.
14. M. om. अतोऽन्यत्र; M. विशेष° for अविशेष° ; M. तथा for यथा.

हर्यतं हरिमिति आकूपारं च त्वाष्ट्रीसाम च यज्ञायज्ञीयं च यद्वाहिष्ठीयं च (आ. क. ८. ७. ५) ति। अनिधनस्यैडस्यान्धीगवस्यानुग्रहार्थमिदमेव युक्तम्। आकारनिधनस्य तु विशेषोक्त्यैव विनियोग इति भावः। उदाहृतं च तच्छन्दोमदशाहस्य सप्तमेऽहनि ॥ २२ ॥

क्रौञ्चं षष्ठे। सुवाधियाः ॥ २३ ॥

**सोमाः पवन्त इन्दव** (ग्रा. १६. ८. ५४८. १-२.) इत्यनयोर्द्वितीयं **क्रौञ्चम्**। तच्च षष्ठेऽहनि स्वयोनौ विनियुज्यते। **स्वानाअरेपसः** इत्यन्तर्निधनम्। निगदवर्तित्वात् ॥ २३ ॥

अभि नो वा इति च ॥ २४ ॥

चकारात् क्रौञ्चं षष्ठ इत्यनुकृष्यते। **अभी नो वाजसातमम्** (ग्रा. १६. ८. ५४९. १-५) इत्येषां चतुर्थं क्रौञ्चं विभाग्यम्। तत् षष्ठेऽहनि **सोमाः पवन्त इन्दव** (ऊ.गा.अ. ८२) इत्यस्मिन् तृचे स्वयोनिनः क्रौञ्चादि पूर्वं प्रयुज्यत इत्यर्थः। ऊहे च तथैवाधीमहे। तत्र ब्राह्मणम्—**क्रौञ्चे भवतः। क्रुङ्ङेष्यमहरविन्दत** (तां. ब्रा. १३. ११. २०-२१) इत्यादि ॥ २४ ॥

परित्यमाकूपारम् ॥ २५ ॥

**परित्यम्** (ग्रा. १६. ८. ५५२. १ .) इत्येत**दाकूपारं** विभाग्यम्। अभ्यस्ताः पादाः क्रमेण भक्तयः ॥ २५ ॥

---

2. O. अत्र हि मध्येनिधनस्य for अनिधनस्य ; M. om. अनिधनस्य. M. सूत्रं for एव.

3. B[2]. before तु, adds च; O. उदाहरणं for उदाहृतं; M. om. तत्.

7. S[2]. अष्टमे for षष्ठे.

10. O. पूर्वं चैडं for चकारात् ; S[1]. अनुवर्तते for अनुकृष्यते.

12. S[1]. before क्रौञ्चादि, adds क्रौञ्चात्।

13. AMB[1]B[2]S[2]. om. प्रयुज्यते.

14. B[1]B[2]. क्रन्दन्दोष्यम्, A. क्रून्देन्दष्यम् for क्रुङ्ङेष्यम्, AB[2]. अविन्दत्, B[1], अविन्दम् for अविन्दत.

४
काबम् । ए५॥ २६ ॥

एकारादिकम् अभिप्रियाणि पवत (ग्रा. १६. ९. ५५४. १-६) इत्येषां द्वितीयं कावम् । कविना दृष्टम् । यस्यापत्यमुशनाः काव्यः । विभाग्यं चैतत् ॥ २६ ॥

१ ऽर ^ ३ १ १ १ १
वाजजिद्विश्वा धना २ नी २३४५ ॥ २७ ॥

5 विश्वाधनानीत्यनेनैव निधनेनोपलक्षितं तेषां पञ्चमं वाजजित् प्राजापत्यं सस्तोभपदविभाग्यम् ॥ २७ ॥

१ २ २    २   १
कावम् । आसूर्यस्यबृहतो । बृहन्नाधी २३ । न्याय्यो वा ॥ २८ ॥

10 तेषामन्त्यं कावम् । तस्य ऋषिः कविः । यत्तु ब्राह्मणे प्राजापत्यत्वमस्योक्तम्—अभिप्रियाणि पवते च नो हित इति कावं प्राजापत्यं साम । (ता.ब्रा. ८.५.१४) इति तदस्य कावनामधेयकत्वात् कवेः प्रजापतिसंबन्धकीर्तनेन प्रशंसार्थम् । वान्तः प्रस्तावः । कावश्रौतकक्ष (पु सू. १०. १०. १३) इत्यादिवचनात् । तृतीयः पादः न्याय्यो वा प्रतिहारः । अत्र स्वारमेव कावं
15 सर्वत्र । गायत्रं पुरस्तात् भवति । स्वारमन्ततः (तां. ब्रा. ७. ३. २७) इति श्रुतेः । ऐडं तु यत्रैवादिश्यते तत्रैव वा । यथा प्रथमे स्वरसाम्नि अभिप्रियाणीत्यैडं कावमन्त्यम् (आ. क. २. २. ५) इति ॥ २८ ॥

18 उद्वद्भार्गवम् ॥ २९ ॥

---

1. O. before कावं, adds ऐडं.

10. O. षष्ठं for अन्त्यं.

12. O. तस्य for तदस्य ; M. °नामधेयत्वात् for °नामधेयकत्वात् ; O. before कवेः, adds :—अनिरुक्तदेवताकत्वाद्वा ; O. om. कवेः.

16. O. निर्दिश्यते for आदिश्यते ; OM. ग्रहणम् for वा ; B²A, om. वा.

कावादनन्तरम् अचोदसो नो धन्वन्त्विन्दवः (ग्रा. १६. ९. ५५५. १-६) इत्येषामाद्यम् उद्वद्भार्गवम् । विभाग्यम् ॥ २९ ॥

सामराजे । हाउहोवा ३ हाइ हो ३ इ । आर्यो ३ नाः सा । अष्टाक्षरो वा ॥ ३० ॥

हाउहोवा ३ हाइ इत्यनेन स्तोभेनोपक्रम्यमाणं तेषां तृतीयं सामराजं प्राजापत्यं सस्तोभपदविभाग्यम् । पञ्चमं च सामराजम् । तस्य वान्तः प्रस्तावः । हो ३ इ । आर्यो ३ नाः सा इति प्रतिहारः । अष्टाक्षरो वा स्तोभादिः ॥ ३० ॥ 5

पूर्वं नवमतन्त्र एव ॥ ३१ ॥

नवमेऽहनि ब्राह्मणम्—सामराजं भवति । साम्राज्यमाधिपत्यं गच्छति । सामाराजेन तुष्टुवान (तां.ब्रा. १५.३.३५) इति । तथा व्यूढरूपिणि छन्दोमानधिकृत्य कल्पः—माध्यंदिनान्त्यानि त्वेषां वाङ्निधनानि जागतानि त्रिष्टुप्सु कल्पयेदिति ह स्माह शाण्डिल्यः । प्रवद्भार्गवमुद्वद्भार्गवं सामराजम् (क्षु. क. ३.१०) इति । तत्रैव पूर्वं सामराजं प्रत्येतव्यम् । न त्वन्यत्र । तथा च तृतीये स्वरसाम्नि कल्पः—पवित्रं त इत्यरिष्टमन्त्यं स्वारं सामराजं यदि विकल्पयेत् (आ. क. २. ४. ५) इति ॥ ३१ ॥ 10 15

---

2. B[2]. प्रथमम् for आद्यम्.

5. O. °माणानां for °माणं तेषां.

10. O. अथ for तथा.

11. O. after अन्त्यानि, adds इति ; O. इत्येषां S[2]. इत्येवैषां for त्वेषां.

13. AB[1]B[2]. परं त्वन्यत्र, M. परमन्यत्रेति for प्रत्येतव्यम् । न त्वन्यत्र; S[1]S[2]. om. प्रत्येतव्यम्.

14. B[1]B[2]A. अरिष्टान्त्यं, O. इष्टमन्त्यं for अरिष्टमन्त्यं.

**सिमानां निषेधः । उत्तरयोः द्व्यक्षरौ चतुरक्षरौ वा ॥ ३२ ॥**

तेषां षष्ठं **सिमानां निषेधः** । तस्य सिमा ऋषयः । **द्व्यक्षरः** स्तोभान्तः प्रस्तावः । तृतीयचतुर्थयोः पादयोरादितो **द्व्यक्षरौ चतुरक्षरौ वा** प्रतिहारौ ॥ ३२ ॥

**वैधृतं वासिष्ठम् ॥ ३३ ॥**

सिमानांनिषेधादनन्तरम् **एष प्रकोशे माधुमाꣳअचिक्रदत्** (ग्रा. १६. ९. ५५६. १) इत्येतद्वासिष्ठं विभाग्यम् । तच्च विधृतिष्वेव विनियुज्यते । तत्र कल्पः—**कावस्यर्क्षु वासिष्ठमन्त्यम्** । **यदेष प्रकोश** (आ. क. ) इति । वासिष्ठान्तराणां तु विशिष्य यत्र विधिस्तत्रैव विनियोग इति भावः ॥ ३३ ॥

**लौशयोः पूर्वमनादेशे ॥ ३४ ॥**

**प्रो आयासीदिन्दुरिन्द्रस्य निष्कृतम्** (ग्रा. १६. ९. ५५७. १-५) इत्येषामाद्ये लौशे । लुशेन दृष्टे इति । ते च विभाग्ये । तयोः **पूर्वमनादेशे** ग्राह्यम् । यथा अभिप्लवस्य चतुर्थेऽहनि आर्भावे **प्रो अयासीदिति लौशमन्त्यम्**

---

2. B[1]. चतुरक्षरो for चतुरक्षरौ.

4. O. om. चतुरक्षरौ.

5. AMB[2]. प्रतिहारः for प्रतिहारौ.

7. O. after अनन्तरम्, adds विषयम्.

8. M. om. विभाग्यम्.

10. M. विशेषोक्त्यैव, O. विषयत्वस्था तत्र तत्र दर्श[यिष्य]ते for विशिष्य ... °स्तत्रैव.

15. MAB[1]B[2]S[1]S[2]. om. यथा; AB[1]B[2]S[1]S[2]. अभिप्लव° for अभिप्लवस्य.

(आ. क. १. ५. ५) इति। अस्य च गीतिविशेष ऊहाम्नायसिद्धः। तथा च सूत्रम्—**लौशयोः पूर्वे वारवन्ता तु विशुष्मामु** (पु. सू. ८. ७. १०) इति। उत्तरस्य तु यत्रैवादेशः तत्रैव ग्रहणम्। यथा समूढे पृष्ठ्ये पञ्चमेऽहनि **गोवित्पवस्वेति द्व्यभ्याघातं लौशमन्त्यम्** (आ.क.१.९.२) इति॥ ३४॥

## प्रवद्भार्गवम्॥ ३५॥

5

तेषां तृतीयं भृगुणा दृष्टं **प्रवद्भार्गवं** विभाग्यम्॥ ३५॥

## यामम्। आ॑ २ इ। इ॑या॥ ३६॥

**आ॒ २ इ। इ॑या** (ग्रा. १६. ९. ५५७. ५) इत्यादिकं तेषामन्त्यं **यामं** सस्तोभपदविभाग्यम्॥ ३६॥

## वृषा च॥ ३७॥

10

**वृषामतीनां पवते विचक्षणः** (ग्रा. १६.९.५५९.१-३) इत्येषामाद्यं च यामं विभाग्यम्॥ ३७॥

## स्वारमनादेशे॥ ३८॥

तयोः पूर्वं **स्वारं यामममनादेशे** ग्राह्यम्। यथा दशरात्रस्य द्वितीयेऽहनि आर्भवे याम भवति। **एतेन वै यामोऽनपजय्यम्** (तां. ब्रा. ११. १०.

15

---

1. $S^1AB^1B^2MS^2$. om. च ; $MS^1$. ऊहाध्ययन° for ऊहाम्नाय° ; O. om. °आम्नाय° ; O. om. तथा ... विशुष्मामिति.
2. $B^2$. विशिष्टाम्, $S^1$. विशुष्मात् for विशुष्माम्.
3. M. अतिदेशः for आदेशः ; O. ग्राह्यम् for ग्रहणम् ; O. om. पञ्चमे ; $S^1$. षष्ठे for पञ्चमे.
4. $AB^1B^2$. द्वाभ्याघातं for द्व्यभ्याघातं ; $B^1B^2A$. om अन्त्यम् ; $S^1S^2O$. after अन्त्यम्, adds : आर्भवस्य.
6. $OS^1S^2$. om. भृगुणा दृष्टम्.
14. A. om. यामम्.
15. A. यमोऽनपजः जग्य्यम्, M. यामेन पजय्यम् for यामोऽनपजय्यम्.

२१-२२) इत्यादि । यथा वाभिप्लवस्य द्वितीयेऽइनि वृषा मतीनां पवत इति याममन्त्यम् (आ. क. १. ३. ५) इति । ऐडस्य तु यत्रैवादेशस्तत्रैव ग्रहणम् । यथा छन्दोमवद्दशरात्रे अष्टमेऽहनि असावि सोमो अरुषो वृषा हरिः इत्यैडं याममन्त्यम् (आ. क. ८. १०. ४) इति ॥ ३८ ॥

5 मरुतांधेनु । चारूणा २३४ इचा ॥ ३९ ॥

त्रिरस्मै सप्त धेनवो दुदुह्रिरे (ग्रा. १६. ९. ५६०. १. ) इत्येतत् मरुतांधेनु ॥ ३९ ॥

इन्द्रस्यापामीवम् ॥ ४० ॥

इन्द्राय सोम सुषुतः परिस्रव (ग्रा. १६.९.५६१.१-२) इत्यनयो-
10 राद्यम् इन्द्रस्यापामीवम् । तच्च विभाग्यम् ॥ ४० ॥

वायोरभिक्रन्दः । द्रा २३४ वीं । णा २३४ स्वा ॥ ४१ ॥

तयोर्द्वितीयं वायोरभिक्रन्दः । तस्य न्याय्यः प्रतिहारः ॥ ४१ ॥

परो वा स्तोभान्तः ॥ ४२ ॥

अथवा न्याय्यात् परः स्तोभान्तः प्रतिहारः । ताइहसा ३ । हा २३ ।
15 इति ॥ ४२ ॥

16 हावाङ्गेति शार्ङ्गम् ॥ ४३ ॥

---

1. O. om. द्वितीयेऽहनि.

2. O. om. याममन्त्यमिति.

8. $S^1S^2$. छन्दोम for छन्दोमवद् ; $AB^1B^2$. एवं for ऐड.

10. $AB^1B^2M$. om. च.

समञ्जन् कक्षीवांस्तस्य ऋषिः । अञ्जतो व्यञ्जतः समञ्जत इति काक्षीवतानि त्रीणि सामानि । शार्ङ्गाणि वा (आ. ब्रा. ५. ९. ११) इति श्रुतेः । विभाग्यमेतत् । तस्य धर्ता दिव इत्यत्र गानविशेष ऊह्याध्ययनसिद्धः । तथा च सूत्रम्—तथा शार्ङ्गं तृतीयोच्चम् ( ) इति ॥ ४३ ॥ 5

## अर्कपुष्पयोः पूर्वमनादेशे ॥ ४४ ॥

शार्ङ्गादनन्तरे पवित्रं ते (ग्रा. १६. ९. ५६१. १-२.) इत्येते अर्कपुष्पे सस्तोभपदविभाग्ये। तयोः पूर्वमनादेशे भवति। तथा नवमेऽहनि ब्राह्मणम्—अर्कपुष्पं भवति । अन्नं वै देवा अर्क इति वदन्ति (तां. ब्रा. १५. ३. २२-२३) इत्यादि । यथा छन्दोमदशाहे चतुर्थेऽहनि कल्पः—तवाहं सोम 10 रारण इत्याष्टादंष्ट्रं चार्कपुष्पं च बार्हदुक्थं च माण्डवं च विदावस्विति यस्य निधनम् (आ. क. १०. ८. ३) इति । उत्तरं तु यत्रैवादिश्यते तत्रैव । यथा सर्पसत्रे द्वितीयाग्निष्टोमे अयं पूषा रयिर्भग इति गौरीवितमेकस्यां क्रौञ्चमेकस्याम् अर्कपुष्पमेकस्यां यच्छन्दस्यम् (आ. क. ११. ९. ५) इति ॥ ४४ ॥ 15

## पौष्कलम् । श्रुष्टाइ ॥ ४५ ॥

इन्द्रमच्छा सुता इमे (ग्रा. १७. १०. ५६६. १-५) इत्येषामन्त्यं पुष्कलेन दृष्टं पौष्कलम् ॥ ४५ ॥ 18

---

1. M. समञ्जन्यः, AB¹B². समञ्जन्य, O. समञ्जत् for समञ्जन् ; O. काक्षीवतः for कक्षीवान्.
4. AB¹B². om. च.
7. O. after इत्येते, adds आदित्यस्य and after °पुष्पे, adds द्वे.
8. OS¹S². यथा for तथा ; OS¹. after ब्राह्मणम्, add भवति.
9. B¹. °पुष्पं मा, OS¹⁻²A. पुष्पाद्यं for पुष्पं ; M. om. देवाः.
10. S¹S². °दशरात्रे, O. °दशाहस्य for दशाहे.
13. AB¹B²MS¹S². om. सर्पसत्रे.

शौक्तम् । शाइशाओ २४६ वा ॥ ४६ ॥

सखाय आ निषीदत (ग्रा. १७. १०. ५६८. १-५) इत्येषामन्त्यं शौक्तम् । शुक्तिराङ्गिरसस्तस्य ऋषिः । वान्तः प्रस्तावः । शाइशा ओ २३४ वा इति प्रतिहारः ॥ ४६ ॥

द्वौ चेच्छाइषा ॥ ४७ ॥

5 शौक्तस्य द्वौ चेत् प्रतिहारौ मतौ तदोत्तमस्य पादस्य प्रथमनवमे अक्षरे शाइषा इत्येते प्रतिहारौ । द्वितीयः पादोऽन्तर्निधनम् । नयज्ञैः परिभू ३ इति च । श्रियै १ इति निधनम् ॥ ४७ ॥

कार्णश्रवसम् । शाइशुन्नह । व्यैः स्वदया २३ ॥ ४८ ॥

10 तं वः सखायो मदाय (ग्रा. १७. १०. ५६९. १-३) इत्येषामाद्यं कार्णश्रवसं कर्णश्रवसाङ्गिरसेन दृष्टमिति । तस्याष्टाक्षरः प्रतिहारः ॥ ४८ ॥

सुज्ञानम् । अग्रेवाचा २ः ॥ ४९ ॥

सोमः पुनान ऊर्मिणा (ग्रा. १७. १०. ५७२. १-६) इत्येषामाद्यं सुज्ञानम् । तस्येन्द्र ऋषिः । पर्व प्रस्तावः । न्याय्यः प्रतिहारः । ऊपास्थाने
15 स्वरिति निधनं कार्यम् । तत्र फुल्लकारेणोक्तम्—सुज्ञाने निधनमेकिने स्वरम्
16 (पु. सू. ८. ७. ८) इति ॥ ४९ ॥

---

7. M. after अन्तर्निधनम्, adds पुनानाय प्रगायता.

8. O. trans. च after श्रिये.

11. O. कार्णश्रवसेन for कर्णश्रवसा ; MB. अङ्गिरसा for आङ्गिरसेन ; O. after इति, adds तस्य चतुरक्षरः प्रस्तावः शाइ [शुन्नह । व्यैः स्वदेया] इति ; S[1]. चतुरक्षरः for अष्टाक्षरः.

14. B[1]. ऊप for ऊपा.

15. AB[1]B[2]O. om. निधनं after इति.

आतीषादीयम् । प॒वमा २३ ना॒ ३ ॥ ५० ॥

तेषामन्त्यं प्रजापतेरातीषादीयम् ॥ ५० ॥

सफम् । म॒हा॒इ ॥ ५१ ॥

**पवस्व मधुमत्तम** (ग्रा. १७. ११. ५७८. १-५) इत्येषाम् अन्त्यं **सफं** देवानामार्षम् । **सफेन वै देवा इमान् लोकान् समाप्नुवन्** (तां. ब्रा. १५.११.४-५) इति श्रुतेः । आसोतोत्तमायां मध्यमे पादे त्रयः पाठविकल्पाः । तदुक्तम्—**आसोफतृतीयायामृतेन योनिवत् मध्ये जाप्लुतं प्रान्त्ययोर्वलोपश्चाद्य उच्चैस्तकारः** (पु. सू. ९. १. १७) इति ॥ ५१ ॥ 5

वाचस्साम । वा॒नप्रा॒क्षा २३ म् ॥ ५२ ॥

**आसोता परिषिञ्चत** (ग्रा. १७. ११. ५८०. १-६) इत्येषामन्त्यं **वाचस्साम** । तस्य वागृषिः ॥ ५२ ॥ 10

शङ्कु । वा॒इश्वा २ वा॒सू २३ तत् सीदन्तीयम् ॥ ५३ ॥

**एतमुत्यं मदच्युतम्** (ग्रा. १७. ११. ५८१. १-६) इत्येषां तृतीयं **शङ्कु** । तदेव **सीदन्तीयम्** । अत्र ब्राह्मणम्—**शङ्कु भवति । अह्नो धृत्यै । यद्वा अधृतं शङ्कुना तद्दधार । तदु सीदन्तीयम् इत्याहुः एतेन वै प्रजापतिरिमान् लोकानूर्ध्वमसीदद्** (तां ब्रां. ११. १०. १२-३) इति ॥ ५३ ॥ 15 17

---

5. B[1-2]MS[1-2]. आर्षेयम् for आर्षम्.

6. O. अस्योत्तमायां for आसोतोत्तमायाम्.

8. B[2]. वालोपः for वलोपः ; O. after इति, adds वचनात्.

16. B[1]M. आसीदति, O. सीदन्ति for असीदद् ; S[1]. प्रजापतेः for प्रजापतिः ; MB[1-2]S[2]. om. ऊर्ध्वं.

## भरद्वाजस्य लोम । सो २३ मा: । तद्दीर्घम् ॥ ५४ ॥

**ससुन्वे यो वसूनाम्** (ग्रा. १७.११.५८२.१-५) इत्येषामाद्यमिदम्। अत्र ब्राह्मणम्—**भरद्वाजस्य लोम भवति । पशवो वै लोम । पशूनामवरुध्यै** (तां. ब्रा. १३. ११. ११-२) इति । आभिप्लविके षष्ठेऽहनि कल्पः— 5 **ससुन्वे यो वसूनां तं वः सखायो मदायेति दीर्घसुज्ञाने । काशीतं वा** (आ. क. १. ७. ५) इति । तस्य पर्व प्रस्तावः । जारास्वरत्वात् । **सो२३मा:** इति प्रतिहारः । उत्तरयोर्मध्यमपादस्य स्वरविकल्पप्रदर्शनार्थोऽभ्यासः । तत्रोक्तम्— **दीर्घे परयोर्दोषापरं नीचैः** (पु. सू. ९. १. ८) इति । दोषावस्तोरित्येतत्स्वरसदृशस्वरा पर्वजातिर्दोषा । तस्याः परमुच्चैर्नीचैर्वेति विकल्प 10 इत्यर्थः ॥ ५४ ॥

## गायत्रपार्श्वम् । क्रीडान्नू १ र्मी २: ॥ ५५ ॥

**एष स्य धारया सुतः** (ग्रा. १७. ११. ५८४. १-५) इत्येषामाद्यं **गायत्रपार्श्वम्** । तस्य देवा ऋषयः । पर्व प्रस्तावः । जारास्वरत्वात् । न्याय्यः प्रतिहारः । हीषीस्वरमन्तर्निधनं ततः पादाद् द्वितीयम् । निगद- 15 वर्तित्वात् ॥ ५५ ॥

## सन्तनिनस्त्रयः प्रस्तावसदृशाः ॥ ५६ ॥

गायत्रपार्श्वादनन्तरं सन्तनि । तस्य देवाः ऋषयः । हाउकारान्तः प्रस्तावः । उत्तरयोः प्रस्तावो नास्ति । **यण्वादीनामप्रस्ताव्या उत्तराः** (पु. सू. 19 १०. ११. २२) इति वचनात् । अत्रादिग्रहणेन अपत्यं सन्तनि शाक्वरवर्ण-

---

8. S[1]S[2]. दीर्घ° for दीर्घे.

9. M. °स्वराः for °स्वरा ; M. दोषास्ताः for दोषा । तस्याः ; AB[1]B[2]M. om. विकल्प इति.

13. AB[1]B[2]. before पर्व, add उकारान्तः.

14. S[1]S[2]O. ततः पादाद्; AB[1]B[2]. द्वितीयश्च पादः for ततः पादाद् द्वितीयं

मित्येतानि गृह्यन्ते । छान्दसाध्याये चतुर्णामप्येषां सन्तानप्रदर्शनार्थं तृचेऽध्ययना- दुत्तरयोः प्रस्तावलोपो युक्त इति भावः । सूत्रकारश्च सन्तनिप्रकरणे **तासु सर्वासु प्रस्तावाः स्युः न्याय्यप्रगाथधर्माभ्याम्** (ला. श्रौ. सू. ६. १. १२) इति पूर्वपक्षमुक्त्वा सिद्धान्तमाह – **नोत्तरयोराचार्याः स्मृतेः । संततं गायतीति च भक्तिलोपदर्शनात्** (ला. श्रौ. ६. १. १३-१४) इति । 5
सन्तनिसंज्ञा चतुर्णामप्यस्ति । तथा च निदानम्—**आवृत्तेऽभिप्लवे कतमत् सन्तनि कुर्यात्** (                ) इत्यादि । प्रस्तावसदृशाः त्रयः प्रतिहाराः । हीषीस्वराणि निगदवर्तीनि च निधनानि । तद्यथा **आसाव्यंशुर्** (ऊ. गा. द. ९०) इत्यत्र **असाहाउ** इति प्रस्तावः । **दाया** इति निधनम् । **अप्सु दक्षो गिरिष्ठा** इति च । **श्येनो हाउ** इति प्रतिहारः । **सादात्** इति निधनम् । 10
**शुभ्रमन्ध** इति च । **स्वदाहाउ** इति प्रतिहारः । **योभिः** इति निधनम् । **आदिमश्व**मित्यादि च । **मधोर्हाउ** इति प्रतिहारः । **मादे** इति निधनम् । एवम् **अर्षा सोम द्युमत्तम** (ऊ. गा. अ. २७) इत्यादावपि द्रष्टव्यम् ॥ ५६ ॥ 13

इति श्रीवरदराज-विरचितायां दशतयीवृत्तौ
प्रतिहारसूत्रव्याख्यायां दशमः खण्डः ॥ १० ॥

---

1. M. छन्दस्य° for छान्दस; S[1]. after तृचे, add गानम्.
3. O. om. स्युः.
4. O. om. स्मृतेः.
9. OS[1-2]A. असाहाउ for असाहाइ.
12. M. आश्वन् for आश्वम्.

## आरण्यके प्रथमं पर्व

# एकादशः खण्डः

अथारण्यकान्यधीयन्ते। तत्र स्थानतो विनियोगव्यवस्थामुक्तामपि वैष्णवोक्ष्णोरन्ध्रादिषु विस्पष्टार्थं स्मारयति—

5 **द्वन्द्वानामेकार्षेयाणामनुपूर्वयोगः ॥ १ ॥**

द्वन्द्वभूतानामेकनामधेयानां साम्नामनुपूर्वं विनियोग इत्यर्थः। वक्ष्यति— **प्र सोम देववीतये इति घर्मस्य तन्वौ** (प्रा. हा. सू. १२. ५) इति। तयोः प्रवर्ग्ये अनुपूर्वं प्रयोगः। तथा च वार्षाहरे **त्वमेतत्** (प्र. हा. सू. १२. ६) इति। तयोश्च श्येने माध्यंदिनार्भवयोरनुपूर्वं प्रयोगः। तत्र कल्पः— **अर्षासोम द्युमत्तम**

10 **इति गायत्रमेकस्यां वार्षाहरमेकस्यां शाक्करवर्णमेकस्याम्** (आ. क. ३. ७. ३) इति। माध्यंदिने **यस्ते मदो वरेण्य इति गायत्रवार्षाहरे** (आ. क. ३. ७. ५) इत्यार्भवे ॥ १ ॥

**यद्याङ्गो वैरूपे तृतीये दशाक्षरः ॥ २ ॥**

**यद्याव इन्द्र ते शतम्** (आ. गा. १. १. १-८) इति अष्टौ वैरूपाणि

15 विरूपेणाङ्गिरसेन दृष्टानीति। तथा च ब्राह्मणम्—**अष्टौ वैरूपाणि** (आ. ब्रा. ६.१.१.१) इति। आर्षेयकल्पश्चाह—**अग्न आयाह्यग्निभिरित्येष आङ्गिरसः प्रगाथः। आङ्गिरसं वैरूपम्** (                    ) इति। तेषां प्रथम-

18 **मञ्जो वैरूपम्**। पर्व प्रस्तावः। **अग्निंदूताया** एवोदूहेन द्वितीयस्वारापन्नत्वात्।

---

4. O. सूचयति for स्मारयति.
8. B. om. तथा च ... प्रयोगः.
9. S[1]. °पूर्वयोः for °पूर्वं.
10. B[1]. om. वार्षाहरमेकस्यां.
15. O. श्रुतेः for ब्राह्मणम्.
17. M. om. प्रथमम्.
18. M. °स्वर° for °स्वार°.

तृतीये पादे प्रथमो दशाक्षरः प्रतिहारः । न त्वा वाज्रिन् सहस्रः स्सूरिया ३१ उवा २३ इति । हीषीस्वराण्यन्तर्निधनानि । इडाश्च तिस्रः । इड् इडेति निधनम् ॥ २ ॥

ह्रस्वाबृहदोपशा । न्याय्यः ॥ ३ ॥

तेषां द्वितीयं ह्रस्वाबृहदोपशा । तस्य वान्तः प्रस्तावः । कावश्रौतकक्ष (पु. सू. १०. १०. १३) इत्यादिवचनात् । नाजा २ तमा इति प्रतिहारः । दिशं विशमित्यादि निधनम् ॥ ३ ॥ 5

वैरूपे पददैवते व्यत्यस्येत् ।
अश्वायै पुरस्तात् स्तोभाः ॥ ४ ॥

तेषां तृतीयं वैरूपम् । तस्मिन् पदं देवतां च व्यत्यस्येत् । यद्यादीनि पदानि । देवताश्च दिशंविशंहस् इत्यादिकाश्चतुर्थपादादूर्ध्वमधीयमाना व्यत्यस्य प्रयुञ्जते इत्यर्थः । तथा च रहस्ये अधीमहे । तत्र अश्वा शिशुमतीत्यस्यै देवतायै । पुरस्तात् ये स्तोभाः ते प्रतिहाराः । तिस्रो देवतास्तृतीयचतुर्थौ च पादाविति पञ्च निधनानि । तथा च सूत्रम्—देवतापदं देवतापदमिति वैरूपे निधनानि (ला. श्रौ. सू. ७. ५. १९) इति । ब्राह्मणं च—पञ्चनिधनं वैरूपं पृष्ठं भवति (ता. ब्रा. १२. ४. ५) इति । तस्यैवं प्रयोगः । वान्तः प्रस्तावः । ओवेत्यादयः स्तोभा उद्गीथः । दिशंविशंहस् इति निधनम् । पुनस्त एव स्तोभाः उद्गीथः । तृतीयः पादो निधनम् । ततस्त एव स्तोभाः प्रतिहारः । 10 15 18

---

1. AB[1]B[2]. तृतीय° for तृतीये.

6. S[1]S[2]. before प्रतिहारः, adds न्याय्य°.

13. तृतीये चतुर्थ°; BA. तृतीयचतुर्थे° for तृतीयचतुर्थौ; AB[2]M. om. च.

14. M. after च, adds आह.

18. A. om. उद्गीथः ; M. पुनः for ततः.

**आश्वाशिशुमती**ति निधनम् । पुनस्त एव स्तोभाः उपद्रवः । **चतुर्थः पादो** निधनम् । पुनस्त एव स्तोभाः उपद्रवः । **इट् इडे**ति निधनम् । **आ इट् इडे**त्येके । तथा च निदानम्—**अथ वैरूपे वदति । यथा मण्डूके आट्करोति । एवं निधनमुपयन्ति** । (नि. सू. ३. ११. १) इति । तस्येदं ब्राह्मणं—**स्या**दित्युपक्रम्य **इकारं त्वेवा इकारी कुर्यात्** इत्यन्तम् ॥ ४ ॥

## अन्तरिक्षम् । पिबा ॥ ५ ॥

**हाउ पिबासुता** (आ. गा. १. १. ९) इत्येतदन्तरिक्षं प्राजापत्यम् । वैश्वदेवमिति केचित् । तस्य पर्व प्रस्तावः । अग्निर्दूतास्वरत्वात् । **स्तोभः पुरस्तादन्तर्वा प्रस्तोतुः** (पु. सू. १०. १०. २) इति वचनात् । **अस्मा३अ । वा औहोहोवा २** इति प्रतिहारः । **सामपूर्वग्रहणेन न्याय्यमग्राम्येषु** (प्र. हा. सू. २. ११) इत्युक्तत्वात् । **इहे**त्यन्तर्निधनानि । **सुष्टुभ** इत्यादि । निधनम् ॥ ५ ॥

## पव्यरिष्टम् ॥ ६ ॥

**पवित्रं त** (आ.गा. १.१.११-१२) इत्यनयोराद्यम् **अरिष्टं** विभाग्यम् । देवानामार्षम् ॥ ६ ॥

---

1. S[1]S[2]. ततः for पुनः; A. om. उपद्रवः.

2. M. om. पुनस्त एव स्तोभाः उपद्रवः । ; M. om. आ इट् इडा.

3. AB[1]. after निदानम्, add उद्गीथास्तृतीयःपादो निधनम् । ततस्त एव स्तोभाः प्रतिहारः । आश्वाशिशुमतीति निधनम् । पुनस्त एव स्तोभाः उपद्रवः (B[1]. om. °पादो निधनम् । पुनस्त एव स्तोभाः उपद्रवः) ; A. वटिति for वदति ; S[2]. तथा for यथा.

4. B[1]. कर्ष करेति for करोति.

5. O. आश्रित्य for उपक्रम्य ; B[1]. इकारत्येवा, B[2]. इकारन्त्वैव, MO. इकारत्येवा for इकारं त्वेवा ; M. इकानि कुर्युः ; B[2]B[1]. इकारी कुर्यात् for इकारी कुर्युः.

14. O. om. विभाग्यम्.

## पिबा । देवस्थानम् । तस्य तृतीये चतुरक्षरमन्त्यं सस्तोभम् ॥ ७ ॥

हाउ पिबा सुता (आ. गा. १. २. १५) इत्येतत् वरुणस्य देवस्थानम् । तस्य पर्व प्रस्तावः । तृतीये पादे अन्त्यं यच्चतुरक्षरं सस्तोभं दियेवृधे ३ इत्यादिकं हाउवा इत्यन्तं प्रतिहारः । सहोनरः । सत्यमोजः । स्वर्ज्योतिः । एस्थादिदम् । इति अन्तर्निधनानि । देवताश्चारण्येगेयेषु (पु. सू.                ) इति वचनात् । द्यौरक्रानिति निधनम् । इह यद्यपि आरण्येगेयानामपि साम्नां बृहद्भारद्वाजादिवत् प्रतिहारस्य गीत्या प्रदर्शने तस्य विस्पष्टप्रतिपत्तिर्लाघवं च सूत्रप्रणयने भवति । तद्यथा देवस्थाने दियेवृधे ३ । होइ(त्रिः) इति तथापि रहस्यत्वादेतेषां गीतिप्रदर्शनमनादृत्य गुर्वपि लक्षणकरणमाश्रितम् । साम्नामेव च रहस्यत्वं नर्चामिति तासां प्रतीकोपादानमविरुद्धम् । तथाहि यास्तावत् ग्रामेगेयार्थमधीता इहोपजीव्यन्ते यद्द्याव इन्द्रते शतम् (सा. २७८) पिबा सुतस्य रसिनः (सा. २३९) इत्यादयः तासां रहस्यत्वमविवादसिद्धम् । यत् पुनरिन्द्रज्येष्ठम् (सा. ५८६) इत्यादीनामृचामारण्यकत्वं लौकिकाः स्मरन्ति तदरण्येगेयार्थमेवैता अधीयन्त इत्येतावता । अत एवाक्रन्दय (आ. गा. २. ७. ७८) इत्यादिकामृचं तत्पदानि च रहस्यत्वान्मध्ये वयमधीमहे । यदि हि इन्द्रज्येष्ठमित्यादीनामपि रहस्यत्वमभविष्यत् तदा तासां मध्ये तदृग्द्वयं तत्पदानां च मध्ये तत्पदानि चाध्यैष्यामहि । यत्तु महानाम्नीरधिकृत्य

---

9. M. °प्रदर्शने for °प्रणयने.

10. AB¹B²S¹S². अनाश्रित्य for अनादृत्य ; S¹S². सूत्र° for लक्षण°.

11. AB¹. विरुद्धम् for अविरुद्धम्.

14. A. अपि वाद° for अविवाद°.

17. M. तद्गानं for तदा.

18. M. तदृक्द्वयं तत्पदं च मध्ये, AB¹B². तत्तदृचं for तदृग्द्वयं तत्पदानां च मध्ये ; S¹S². om. तत्पदानि.

सूत्रकारेणोक्तम्—रहस्यत्वाच्चानिर्देश (                    ) इति तत् केवलं तासामेवर्चां रहस्यत्वमप्यभिप्रेत्य। न पुनरिन्द्रिज्येष्ठ इत्यादीनामपि। तथा अग्न आयूंषि पवसे (सा. ६२७) इत्यादीनां ब्राह्मणादिषु प्रतीकनिर्देशो दृश्यते। तद्यथा अग्न आयूंषि पवसे इति प्रतिपदं कुर्यात् (तां. ब्रा. ६. १०. १) यज्ञा यथा अपूर्व्येति [चतुर्थस्याह्नो] बृहद् (तां. ब्रा. २१. ९. १६) इत्यादि ॥ ७ ॥

शं न आथर्वणम्। उत्तरयोश्चतुरक्षरौ सस्तोभौ ॥ ८ ॥

उहुवा ओहा। औहोवा। शन्नः (आ. गा. १. २. २३) इति आथर्वणम्। तस्य ऋषिरथर्वा। शन्नोदेवीरित्येवमन्तः प्रस्तावः। ततः परः स्तोभः उद्गीथाङ्गम्। विधाद्यत्वात्। द्वितीयतृतीययोः पादयोरादितः पुरस्तात् स्तोभसहितौ चतुरक्षरौ प्रतिहारौ। तथा च सूत्रम् — [स]पुरस्तात् स्तोभावाथर्वणस्य (ला. श्रौ. सू. ७.४.१४) इति। आवत्। सुवः। ज्योतिः। ई २३४५ इति निधनानि। तथा च ब्राह्मणम्—चतुर्णिधनमाथर्वणं भवति। चतूरात्रस्य धृत्यै (तां. ब्रा. १२. ९. ८) इति ॥ ८ ॥

बृहत्। त्वामित् ॥ ९ ॥

औहोइत्वामिद्धि (आ. गा. १. २. २७) इति बृहत्। तस्य भरद्वाज ऋषिः। एकारान्तः पादः प्रथमायां प्रस्तावः। उत्तरयोर्द्व्यक्षरः। त्वांकाष्ठा ३४।

---

1. B[1]. निर्देशः for अनिर्देशः; M. om. तत् केवलं.
2. OS[1]S[3]. after रहस्यत्वम् om. अपि.
4. AB[1]B[2]. तथा for तद्यथा.
7. A[2]. उभयोः for उत्तरयोः.
9. M. om. एवम्; AMB[1]B[2]. after परः, adds तु.
10. O. विभाग्यत्वात् for विधाद्यत्वात्.
13. O. om. चतुर्निधनं; S[1]. चतुर्निधनाथर्वणं, S[2]. चतुर्निधनमाथर्वणं for चतुर्निधनं.
17. M. trans. प्रथमायां after प्रस्तावः.

औहोवा इति न्याय्यः प्रतिहारः । सामपूर्वग्रहणात् । अस्य आवर्तिस्तोत्रगतस्योत्तमायामुत्तमाभ्यासात् पूर्वं नाऽज्जा इग्यूऽ२३४ षाइ इति पाठः । स रोह इत्युच्यते । उत्तमे त्वभ्यासे नाऽ २ जिग्यूऽ २३४ षा इति । स प्रत्यवरोहः । एवं सर्वत्र रोहप्रत्यवरोहौ द्रष्टव्यौ । तदुक्तं निदानकारेण—**बृहतः स्तोत्रोत्तमायां ब्राह्मणोक्तानामारोहणमुत्तमं न रुह्यादित्याचार्याः । अप्रमाथाय** (नि. सू. २. ९. ३०) इत्यादि ॥ ९ ॥ 5

## स्वादिस्वाशिरामर्कौ दीर्घतमसोऽर्कौ मरुतां संस्तोभोऽग्नेरर्क आज्यदोहानि ॥ १० ॥

एतानि सस्तोभपदविभाग्यानि । **अयामायाम् । स्वादिष्ठया २** (आ. गा. १. ३. ३०.) इति **स्वाशिरामर्कः** । तस्य स्वाशिरा ऋषयः । तत्र श्रुतिः **प्राणा वै स्वाशिराः** (तां. ब्रा. १४. ११. ९) इति । **त्रिपदानां तु तृतीयं स्तोभश्चेत्** (प्र. हा. सू. १. १५.) इत्यादि न विस्मर्तव्यम् ॥ 10

[हाउ त्रिः] **औहोवाएहियाहाउ । धार्ता** (आ. गा. १. ३. ३१) इति **दीर्घतमसोऽर्कः** ॥ 14

---

1. S[2]O. om. न्याय्यः; S[1]. आद्यः for न्याय्यः; S[1]S[2]. after प्रतिहारः । add: सन्याय्यः; M. om. अस्य; S[1]S[2]. आवृत्ति° for आवर्ति°; S[2]. भूतस्य for °गतस्य; AB[1]B[2]. om. अस्य आवर्ति ... एवं (L. 4.).

4. A. °प्रतिरोहौ, B[1]B[2]. प्ररोहौ, O. रोहौ for प्रत्यवरोहौ; M. after °रोहौ, adds उभौ.

5. M. ब्राह्मणेन for ब्राह्मण°; B[1]B[2]. रिह्यात् for रुह्यात्.

10. AB[2]S[1]. स्वाशिरामर्काः, OB[1]M. स्वाशिरामर्कः for स्वाशिराः; MO. ऋषिः for ऋषयः

12. M. तृतीयः for तृतीयं; O. चेदिति न, M. चेतिदिक् इत्यादि for चेदित्यादि; M. द्रष्टव्यम्, O. प्रहर्तव्यम् for विस्मर्तव्यम्; M. om. न.

कसन्तानोनवुः(त्रिः)। प्रवइन्द्राय (आ. गा. १. ३. ३३) मरुतां संस्तोभः। मरुत इति लिङ्गात् ॥

होहोवा। अग्निमूर्द्धा (आ. गा. १. ३. ३४) इत्यग्नेरर्कः। ए। अग्निर्मूर्द्धेत्यादि तस्य निधनम् ॥

5 काज्यदोहम्—कहिम् स्थिचिदोहम्—कच्योहम् मूर्द्धेति त्रीण्याज्यदोहानि। लिङ्गात् प्रथमम्। क्रमात् परे। अग्नेर्वैश्वानरस्य त्रीणि ॥ आज्यदोहानि (आ.ब्रा.६.१.४.१-२) इत्यार्षेयब्राह्मणम्। ए आज्यदोहम् इति त्रीणि निधनानि प्रथमस्य। ई २३४५ इति निधनं द्वितीयस्य। ए ३। ऋतम् इति तृतीयस्य। एषां च विशेषोपादानेनैव गर्गत्रिरात्रे विनियोगः ॥ १० ॥

10 ## ऋषभाः ॥ ११ ॥

अतः परे त्रयः ऋषभाः। रुद्रस्य त्रय ऋषभाः ॥ रैवतो वैराजः शाक्वर (आ. ब्रा. ६. १. ४. ३-४) इति श्रुतेः ॥ ११ ॥

## रैवतो तृतीये मध्यमोऽभ्यासः ॥ १२ ॥

सुरूपकृत्नुमूतये (आ. गा. १. ४. ४६) इत्येतस्मिन् रैवतऋषभे 15 षट्त्रिंशदक्षर ऋषभस्य रैवतस्य (ला. श्रौ. ६. १०. १२) इति सूत्रोक्तः प्रस्तावः। तृतीये पादे द्याविद्यावाइ इति मध्यमोऽभ्यासः प्रतिहारः। उमिति निधनम् ॥

काइहि पिब (आ. गा. १. ४. ४७) इति वैराजऋषभः सस्तोभः पदविभाग्यः। श्रुधीहवं विपिपानस्याद्रेः (र. गा. क्षु. १४) इत्यत्र मारे 20 आस्मादित्यादेः पादस्याभ्यासः स्वरविकल्पप्रदर्शनार्थः। तदुक्तम्—ऋषभे कांपा (पु. सू. ९. १. २१) इति ॥ १२ ॥

22 ## शाक्वरे चतुर्थं सस्तोभम् ॥ १३ ॥

---

18. O. हुवम् for हवम् ; M. after आदेः पादस्याभ्यासः ins. आद्यपादाभ्यासः ; O. आदौ for आदेः.

**ओ ३१ म्।** **स्वादोरे** (आ. गा. १. ४. ४८) इति **ऋषभः शाक्करः।** न तु क्रमवशात् द्वितीय ऋषभः शाक्वरो भवितुमर्हति। अनेनैव द्वितीयस्य विभाग्यत्वात्। ऋषभस्य शाक्वरस्य च विषमभक्तित्वकथनात्। अस्याः पङ्क्तेः चतुर्थः पादः सस्तोभः प्रतिहारः। अत्र सूत्रम्—**पाङ्क्तस्यानुष्टुप्सु द्वितीयं पदं द्वैधं व्यूहेच्चतुरक्षरशो यथा ऋषभस्य शाक्करस्य** (ला. श्रौ. सू ७. ९. ११) इति। अस्य **पवस्व वाजसातय** इत्यनुष्टुप्सु भक्तिविभाग उच्यते। **ओमिति** स्तोभान् प्रथमं च पादं प्रस्तोता ब्रूयात्। अथ **शंयोरित्येतस्मात्** देवतापदात् पूर्वमृगन्तवदुपायवतः स्तोभान् प्रस्तोतैव ब्रूयात्। **उपायवन्तः स्तोभाः एकवृषभस्य। देवतासु च ऋषभस्य शाक्करस्य। तासां नाना स्तोभेयुः** (ला श्रौ.सू.७.६.५-७) इति वचनात्। उपाय इति वा शब्दस्यात्राभिधानम्। **शंयोरिति** सर्वे। अथोद्गाता उद्गीथादोंकारादनन्तरम् **ओम् ओम् ओम् पा एवा एत्रा एधाऽ१** इत्युक्त्वा तानैवोपायवतः स्तोभान् ब्रूयात्। **हविरिति** सर्वे। पुनरप्योमिति त्रिरुक्त्वा **रा एया एह्र एत आ** इति ब्रूयात्। पुनरप्युपायवतः स्तोभान्। अयमुद्गीथः। **सुवरिति** सर्वे। अथ प्रतिहर्ता ओमिति स्तोभानुक्त्वा **इन्द्रा ए (वृष्णा ए!)** इत्यादिकं पादं ब्रूयात्। उपायवतः स्तोभांश्च। अयं प्रतिहारः। **ज्योतिरिति** सर्वे। अथ पुनरुद्गाता ओमिति त्रिः स्तोभानुक्त्वा चतुर्थपादादनन्तरम् ओमित्यादिवान्तं ब्रूयात्। अयमुपद्रवः। **इट् इडेति** निधनम्। एवमुत्तरयोरपि द्रष्टव्यम्। अस्य विभाग्यत्वपक्षोऽपि सूत्रकारेण दर्शितः। **सदेव ते पदे**

---

2. $S^2$. तृतीयः for द्वितीयः, O. ऋषभशाक्वरे for ऋषभः शाक्वरः.

3. $S^2$. तृतीयस्य for द्वितीयस्य ; $AMB^1B^2S^1$. विभाग्यतभनात् for विभाग्यत्वात् ; O. om. ऋषभस्य and च.

5. O. om. द्वितीयं ... इत्यनुष्टुप्सु (L. 6).

11. O. om. अत्र.

16. $OAB^1B^2M$. om. इति.

17. $AB^1B^2$. om. त्रिः.

19. $S^2$. पदे न for पदे.

प्रस्तावप्रतिहारौ विभाग्यश्चेत् (सू. ) इति। प्रस्ताव-
प्रकरणे चोक्तम्। सदेवतो वा राजन शाकर्षभयोः (पु. सू. १०. १०.
११) इति॥ १३॥

आन्धान्तास्त्रयोऽतीषङ्गाः॥ १४॥

5 ए पुरोजिती (आ. गा. १. ४. ४९) इत्यतीषङ्गः। इन्द्रस्य त्रयो-
ऽतीषङ्गाः (आ.ब्रा.६.४.४) इति श्रुतेः। तस्मिन्नान्धान्तास्त्रयः प्रतिहाराः।
आइही (ग्रा. ८. ९. ३१३. २) निहवे असाविदेवंगो ऋजीक ३ मान्धा
३ः इत्यत्र अन्धशब्दस्य मध्यमाभ्यासरूपा पर्वभक्तिरान्धेत्युच्यते। स्वरेण
तत्सदृशरूपा आन्धान्ताः। अस्य यदिन्द्र चित्र (र. गा. क्षु. १७) इत्यत्र
10 भक्तय उदाह्रियन्ते। ए यदिन्द्र चाइ इति प्रस्तावः। आइन्द्रा। सूताः।
अण्वी इति प्रतिहारः। इडाकारोऽथकार इट् इडेति निधनानि। एवं स्तोत्रो-
यान्तरेष्वपि॥ १४॥

धर्तेति पदस्तोभा द्वादशनिधनाः
स्तोभविभाग्याः॥ १५॥

15 हाह। हौवा ओ२३४वा (द्वि च त्रिः)—क हौवाओ२३४वा।—
औहौहोआ २।—आऔहोवाहाइ—धर्तेति चत्वारः पदस्तोभाः। प्रजा-
पत्याश्चत्वारः पदस्तोभाः॥ गौतमा वा वैश्वामित्रा वैन्द्राग्ना वा
(आ. ब्रा. ६. ४. ६-७) इति। ते च प्रत्येकं द्वादशभिर्निधनैर्युक्ताः स्तोभ-
विभाग्याश्च। पदानां निधनत्वात्। तथा चाष्टेडपदस्तोभमधिकृत्य ब्राह्मणम्—
20 द्वादशनिधनो भवति प्रतिष्ठायै (तां. ब्रा. १३. ५. २५) इति। अत्र
21 सूत्रम् – निधनानि पदानि पदस्तोभेषु तथेडाः। तेभ्यो नानास्तोभेषु

---

5. M. अतीशयङ्गाः for अतिषङ्गाः.

6. M. तृतीयः for त्रयः; S[1]. तस्मात् for तस्मिन्.

8. O. om. पर्व°.

20. सूत्रं च for अत्र सूत्रम्.

(ला. श्रौ. सू. ७. ७. १-२) इति। तत्र प्रथमे पदस्तोभे चत्वारः पादाः इडाश्चाष्टाविति द्वादशनिधनानि। द्वितीये तु इडाव्यपेतयोः पादयोः चत्वार्यर्धानि। पादौ च द्वौ। इडाश्च षट्। इति द्वादश। तृतीये तु इडाव्यपेतानाम् अष्टावर्धानि चतस्रश्चेडा इति द्वादश। उत्तमस्य तु द्वादश। उत्तमस्य तु द्वादशनिधनत्वं [परस्तात्] स्वयमेव दर्शयिष्यति ॥ १५ ॥ 5

एषामविभाग्यत्वपक्षोऽप्यस्तीत्याह—

नवमैर्वा स्तोभैः ॥ १६ ॥

अविभाग्यत्वपक्षे नवमैर्निधनार्थमावृत्तैः स्तोभैः प्रतिहार इत्यर्थः ॥ १६ ॥

पूर्वेण वाद्ये परेणान्त्ये ॥ १७ ॥

पूर्वेणाष्टमेन स्तोभेनाद्ये पदस्तोभे प्रतिहारः। परेण दशमेन स्तोभेन 10
चतुर्थे। एवमविभाग्यपक्षः उक्तः। अस्मिन् पक्षे सर्वेषां प्रथमेन स्तोभेन प्रस्तावः। तथा च सूत्रम्—अविभाग्यश्चेदष्टमेन स्तोभेन प्रथमस्य, नवमेन परेषां, दशमेन वान्त्यस्य, सर्वेषां प्रथमेन प्रस्तावः (द्रा. श्रौ. सू. ) इति ॥ १७ ॥

अथ स्वपक्षमाह— 15

विभाग्यास्त्वेव प्रागन्त्यात् ॥ १८ ॥ 16

---

1. M. om. तत्र.

3. M. अष्टौ for चत्वारि ; B[1]B[2]A. पदौ for पादौ.

4. MAB[1]B[2]S[2]. उत्तरस्य, O. प्रथमस्य for उत्तमस्य.

6. MAB[1-2]. अविभाग्य° for अविभाग्यत्व°.

9. MB. after परेण, adds: वा.

11. M. before चतुर्थे, adds तृतीय° ; O. om. उक्तः.

तुशब्दः पक्षव्यावृत्त्यर्थः। **अन्त्यात् पूर्वे** त्रयः पदस्तोभा **विभाग्या एव स्युः**। पदशः स्तोभविभाग्य इत्यर्थः। **तत्र पदं पदं विभजन्ते** (प्र. हा. सू. १. ११) इत्युक्तत्वात्। अन्त्यस्य तु पदशः विभागो नास्ति। अपि तु स्तोभविभागमात्रमेवेति परस्तात् दर्शयिष्यते। अतः **प्रागन्त्या-**
5 **दित्युक्तम्** ॥ १८ ॥

तत्र पूर्वेषां त्रयाणां पदशो विभागं दर्शयति—

## पदभाज इडे चाभितः प्रथमे ॥ १९ ॥

**प्रथमे** पदस्तोभे प्रतिपाद**मभितो** ये इडे ते अपि तत्तत् **पदभाजः** पुरुषस्य भवेताम्। तत्तदिडाङ्गभूतमपि स्तोभं स एव ब्रूयादित्यर्थः ॥ १९ ॥

10

## अयुजोश्चोत्तरे ॥ २० ॥

**उत्तरे** द्वितीये पदस्तोभे **अयुजोः** प्रथमतृतीययोः पादयोरभितो ये इडे ते अपि तत्तत्पदभाज एव स्यातामित्यर्थः ॥ २० ॥

## शेषे पदमध्यमे ॥ २१ ॥

**शेषे** द्वितीयस्य पदस्तोभस्य युजोः पदयोः तृतीये पदस्तोभे पदानां
15 **मध्यमे** प्रदेशे या इडास्तास्तत्तत्पदभाज एव स्युरिति ॥ २१ ॥

---

1. OAB[2]. पादाः स्तोभः for पदस्तोभा.

2. MO. पादशः for पदशः.

4. O. °मात्रः for °मात्रम्.

11. O. उत्तरे ; AB[1]B[2]. om. अभितः.

14. AB[1]B[2]. om. द्वितीयस्य पदस्तोभस्य युजोः पदयोः; S[1]. om. तृतीये.

15. AB[1]B[2]. इडा तत्तत् for इडास्तास्तत्तत्.

तदेवमाद्यानां त्रयाणां पदशो विभागो व्याख्यातः। अथोत्तमस्य विभागे विशेषमाह—

**उत्तमेऽयुजोश्चत्वारि त्र्यक्षराणि।**
**युजोस्तच्छेषः। पदमिडा च॥ २२॥**

उत्तमे द्विरिडे पदस्तोभे अभिप्रियाणि (र. गा. अ. १४) इत्यत्र अयुजोः प्रथमतृतीययोः पादयोः त्र्यक्षराणि चत्वारि निधनानि कार्याणि। तान्यष्टौ संपद्यन्ते। अथ चत्वार्यवशिष्यन्ते। तानि युजोः द्वितीयचतुर्थयोः पादयोः कार्याणि। कथम्? पदमेकम् इडा च पदमिडेति। तदेव द्वादश-निधनानि। तत्र प्रथमे पादे त्रीणि त्र्यक्षराणि प्रस्तोतुः। चतुर्थं त्र्यक्षरं द्वितीयश्च पाद इडा चोद्गातुः। तृतीये पादे त्रीणि त्र्यक्षराणि प्रतिहर्तुः। चतुर्थं त्र्यक्षरं चतुर्थः पाद इडा चोद्गातुः। इत्येवं स्तोभानां समो विभागः॥ २२॥

अथास्य पादशो विभागं दर्शयितुं प्रकारान्तरमाह—

**चतुरक्षरशो वायुजौ द्वैधमितरौ॥ २३॥**

अयुजौ प्रथमतृतीयौ पादौ चतुरक्षरशस्त्रीणि त्रीणि निधनानि कार्याणि। इतरौ द्वितीयचतुर्थौ द्विधा कृत्वा द्वौ अर्धपादाविडा चेत्येवं त्रीणि

---

2. M. विभागशेषम् for विभागे विशेषम्.

3. S[1]S[2]. अक्षराणि for त्र्यक्षराणि

6. O. om. निधनानि ... त्र्यक्षराणि. (L. 9)

8. M. अथ for कथम्.

9. MS[1]. त्रीणि अक्षराणि, A. त्रीणि त्रीणि अक्षराणि for त्रीणि त्र्यक्षराणि; S[1-2]O. द्व्यक्षरम् for त्र्यक्षरम्.

10. B[2]MS[1]S[2]. अक्षराणि for त्र्यक्षराणि.

11. MB[2]. एव for एवं; M. समशः for समः.

12. O. पदभेदेन भागं दर्शयन् for पादशो विभागं दर्शयितुम्; M. प्रकारम् for प्रकारान्तरम्.

14. O. अयुजोः for अयुजौ.

15. M. द्वौ द्वौ पादौ, O. द्वौ पादौ for द्वौ अर्धपादौ.

त्रीणि। तत्र त्रिभिस्त्रिभिर्निधनैः पदशो विभागः स्पष्ट एव। सूत्रकारश्चाह—
**निधनानि पदानि पदस्तोभेषु तथेडास्तेभ्यो नानास्तोभेयुः। त्रिभ्यः प्रथमेभ्यः। प्रस्तोता। त्रिभ्य एव सप्तमप्रभृतिभ्यः प्रतिहर्ता। अर्धपदं निधनमिडाव्यवेतेषु। सर्वमव्यवेतेषु। चतुर्थस्य प्रथमः पादः।**
5 **त्र्यक्षराणि चत्वारि निधनानि। तथा तृतीयः। द्वितीयोत्तमौ वा द्वैधं चतुरक्षरश इतरौ** (ला. श्रौ. सू. ७. ७. १-९) इति। तत्राष्टेडस्य
**पदस्तोभस्य** एवं प्रयोगः। हाहु (३र) । हौवा (२^) ओं (३) २३४ वा (५) इत्यादिस्तोभं
प्रस्तोता ब्रूयात्। ईडेति सर्वे। स्तोभं पुनः स एव। घर्तेति पादं सर्वे। पुनः
स्तोभं स एव। ईडेति सर्वे। तत ओंकारादिकं हाहहौवेत्यादिकं स्तोभमुद्गाता
10 ब्रूयात्। ईडेति सर्वे। पुनः स्तोभमुद्गाता। दक्षोदेवानामिति पादं सर्वे।
स्तोभं पुनः स एव। इडेति सर्वे। अथ प्रतिहर्ता हाहेत्यादिस्तोभं ब्रूयात्।
ईडेति सर्वे। पुनः स्तोभं प्रतिहर्ता। हरिः सृजान इति पादं सर्वे। पुनः स्तोभं
स एव। ईडेति सर्वे। अथ पुनरुद्गाता स्तोभम्। ईडेति सर्वे। पुनः स्तोभं
स एव। वृथा पाजांसीति पादं सर्वे। स्तोभं पुनः स एव। ईडेति सर्वे।
15 एवं स्तोत्रीयान्तरेष्वपि। **पवस्व वाजसातये** (र. गा. द. १६) इत्यत्रोत्तमायां
**पवमानमहित्वन** इत्यस्य पादस्य अभ्यास[:] स्वरविकल्पप्रदर्शनार्थः। उक्तं हि
**अष्टेडरयिष्ठयोर्हित्वनादीदिहिस्वर**—(पु. सू. ) इति।
एवमुत्तरेष्वपि पदस्तोभेषु प्रयोगप्रकारो द्रष्टव्यः। एषां च कल्पब्राह्मणयोरष्टेडः
19 षडिड इत्यादिविशेषणोपादानेनैव विनियोगोक्तेर्विषयव्यवस्था सिद्धा ॥ २३ ॥

---

5. MB[1]. तत्र for तथा; S[1]AO. द्वितीयो तृतीयोत्तमौ for तृतीयः। द्वितीयोत्तमौ.

6. M. तत्र तत्र for तत्र.

8. A. after पादं, adds पुनः; O. पदं for पादं.

10. O. पदं for पादं.

14. S[2]. स्तोभान् for स्तोभम्; M. after एव, adds ब्रूयात्.

16. S[1]. सर्व° for स्वर°.

18. O. तेषां for एषां.

## संसर्पाणि सर्पसामानि ॥ २४ ॥

पदस्तोभेभ्योऽनन्तराणि **अभाइ—अभिप्रमंहि—चर्षणी**—इत्येतानि **संसर्पाणि सर्पसामानि** चोच्यन्ते। तेषां सर्पा ऋषयः। प्रथमद्वितीये सस्तोभपदविभाग्ये। तृतीयं स्तोभविभाग्यम्। प्रथमस्य **सर्पसुवा २३४५:** इति निधनम्। द्वितीयस्य **प्रसर्पसुवा २३४५:** इति। तृतीयस्य **उत्सर्पसुवा २३४५:** इति। तेषां चोभयार्षेयोपादानम् उभयथापि व्यवहारात्। तत्र सर्पसत्रे ब्राह्मणम्—**सर्पसामानि विषुवति क्रियन्ते** (तां. ब्रा. २५. १५. १) इति। तथा तत्रैव विषुवति माध्यंदिने पवमाने कल्पः—**पुनानः सोमधारयेति समन्तमेकस्यां संसर्पमेकस्यां यत्तृतीयं दैर्घश्रवसमेकस्यां रथन्तरं तिसृषु** (आ. क. ११. १०. ३) इति। पृष्ठेषु च—**श्यैतस्यर्क्षु संसर्पं यत् प्रथमं स्वासुकालेयम्** (आ. क. ११.१०.४) इति। आर्भवे च—**पुरोजिती वो अन्धस इति श्यावाश्वमेकस्यां तस्यामेवान्धीगवं संसर्पं तिसृषु यद् द्वितीयम्** (आ. क. ११. १०. ५) इति ॥ २४ ॥

अत्र **सर्पसामानि विषुवति क्रियन्ते** (तां. ब्रा. २५. १५. १) इति ब्राह्मणे अविशेषोक्तावपि योऽयं कल्पकारेण विषयनियमः कृतः तत्र हेतुं दर्शयति—

---

3. M. संसर्पाः for सर्पाः; B[1]. तृतीये for द्वितीये.

4. O. प्रथमविभागस्य for प्रथमस्य.

5. O. after इति, adds निधनम्.

6. M. ब्राह्मणार्षेययोः उपादानं, O. उभायार्षेययोरुपादानं for उभयार्षेयोपादानं; O. उभय° for उभयथापि; M. om. तत्र.

8. M. तथा for तत्र.

15. MS[1]. सामान्योक्तावपि तयोः for अविशेषोक्तावपि योऽयं; O. सामान्येन for अविशेष°; S[2]. विशेषनियमः कृतः, O. विषुवति प्रथमं कृत्वा for विषयनियमः कृतः; O. after हेतुं, adds प्रथमं.

## लिङ्गतो नियमः ॥ २५ ॥

उत्सर्प-सर्प-प्रसर्पेति निधनलिङ्गादित्यर्थः। अत्र निदानकारः—विषुवति सर्पसामानि कल्पसप्रायाणि इति। तेषां यदेवमानुपूर्व्यं निधनान्येषामादित्यस्यैवाभ्युपाकृतानि तेषामानुपूर्व्यम्। अथाप्येषामेतद्गणनिधनम्। तत् त्रिणिधनानुग्रहाय माध्यंदिनेऽचिकर्षीदनुपूर्वमितरे (नि. सू. १०. १२. २०-२४) इति ॥ २५ ॥

## त्वन्तूर्यं त्रिषन्धि ॥ २६ ॥

औहोइ त्वमिन्द्रप्रतूर्तिषू ३ ए (आ.गा.२.६.६६) इति त्रिषन्धि। त्रयाणां बृहद्रथन्तरवामदेव्यानां संधानमत्रेति। तस्य ऋषिः प्रजापतिः। न्याय्यः प्रतिहारः ॥ २६ ॥

पक्षान्तरमाह—

## परो वा वामदेव्यसदृशः ॥ २७ ॥

न्याय्यात् परो वामदेव्यप्रतिहारसदृशः प्रतिहारः। तरौहो ३। हिम्मा २ इति। अस्य नूनं शाखान्तरे विनियोगोक्तिदर्शनात् भक्त्युपदेशः ॥ २७ ॥

## एकं वृषा त्रिरुक्ताद्यम् ॥ २८ ॥

---

3. O. यथापूर्वं° for यदेवमानुपूर्व्यं.

4. B¹. अत्युपा for अभ्युपा ; M. आनुपूर्वम् for आनुपूर्व्यम्.

5. O. after निधनं, adds तत्.

12. M. वामदेव्यस्य for वामदेव्य°.

13. MAB¹B²S¹S². om. न्याय्यात् परो ; O. वामदेव्यस्य for वामदेव्य°.

14. S¹MAB¹B². विनियोगोऽस्तीति for विनियोगोक्तिदर्शनात्.

**इमं वृषणं कृणुतैकम्** (आ.गा.२.६.६८) इत्येकपदायां वृषाख्यं साम प्राजापत्यम्। तस्य **एकमित्येतद्** द्व्यक्षरं **त्रिरुक्ताद्यं** प्रतिहारः। **एका ओवा** इत्यस्य त्रिरुक्तस्य आद्यं वचनमित्यर्थः॥ २८॥

पक्षान्तरमाह—

## ओवान्तो वानवकृष्टः॥ २९॥ 5

जातावेकवचनम्। एकमित्यस्य षडभ्यासाः। तेषामाद्यास्त्रयः **ओवान्ता** अनवकृष्टाः। अन्त्यो मन्द्रान्तः कर्षणादवकृष्टः। तत्रानवकृष्टः **ओवान्तः** प्रतिहार इति मतान्तरमित्यर्थः। अस्य **अभिप्रव** इत्यत्र भक्तय उदाह्रियन्ते—**इन्द्रा ओवेत्येवमन्तः प्रस्तावः। कृष्टाद्वृष्ण** (पु. सू. १०. १०. १४) इति वचनात्। अस्यार्थः। वान्त इत्यनुवर्तते। कृष्टादोकारात् परो यो वाशब्दः तदन्तः प्रस्ताव इति। **पुरा ओवेति** प्रतिहारः। अथवा **पुरा ओवा**। **वासा ओवा**। **साहा ओवा**। इत्यन्तं पर्वत्रयमपि॥ २९॥ 10

## एकवृषस्योपायवन्तः स्तोभाः पदानां निधनत्वात्॥ ३०॥

**हाहीम्। य एक** (आ. गा. २. ६. ६९) **इत्येकवृषं** प्राजापत्यम्। तस्योपायवन्तः स्तोभाः स्युः। ऋगन्तवद्धागन्ता इत्यर्थः। तत्र हेतुः **पदानां निधनत्वादिति**। पदानां निधनत्वमस्येत्यर्थः। पदानां हि निधनत्वमुपायवत् स्तोभपूर्वकत्वेन विना न सिद्ध्यतीति भावः॥ 15 17

---

7. O. om. अनवकृष्टः ... ओवान्तः; MA. मन्द्रान्तं for मन्द्रान्तः; M. अनवकृष्टः for अवकृष्टः.

9. M. एव अन्तः for एवमन्तः.

12. O. पर्व निधनम्। एवमुत्तरयोरपि for पर्वत्रयमपि.

15. S[1]S[2]AB[1]B[2]M, om. तत्र हेतुः.

तथा च सूत्रकारो वागादीनुपायान् प्रकृत्योक्तवान्। **तेभ्यो यन्निगद-वर्त्यनन्तरमार्चिकं तेन सहोपेयुरनादेश** (ला. श्रौ. ७. ८. ६) इति। अस्यार्थमुपरिष्टात् स्पष्टयिष्यामः। अत्र प्रस्तावखण्डिकायां **स्तोभ उपायान्तः** (पु. सू. १०. ११. १३) इत्यधिकृत्योक्तम्—**द्विरेकवृष** (पु. सू. १०. ११. १५) इति। अयमर्थः एकवृषे पदानां देवतानां च पृथक् स्तोभाहरणं कर्तव्यम्। तत्र प्रथमस्य पादस्य प्रथमायाश्च देवतायाः पुरस्तादाह्रियमाण उपायवान् स्तोभः प्रस्ताव इति। सूत्रकारेण तु **उपायवन्तः स्तोभाः एकवृषस्य** (ला. श्रौ. सू. ७. ६. ५) इत्येतावत एवोक्तत्वात्। तन्मते पददेवतयोः समस्यैव स्तोभाहरणमिति गम्यते। अन्यथा शाक्वरऋषभवदिहापि देवतानां नानास्तोभैयुरित्यवक्ष्यत्। **अस्याभिप्रवस्सुराधसम्** (र. गा. प्रा. ४) इत्यत्रैवं प्रयोगः। हाहीमित्यादि। **योवाहाइ**। उवेत्यन्तं प्रस्तोता ब्रूयात्। **अभिप्रव** इति पादं सर्वे। **एकं सामैरद्वृधे** इति देवतापदं च। तानेव स्तोभानुद्गाता। द्वितीयं पादं सर्वे। **एकं समैरयन्माहे** इति च। तानेव स्तोभान् प्रतिहर्ता। **यो जरितृभ्य** इति पादं सर्वे। **एको वृषा विराजतीति** च। पुनस्तानेव स्तोभान् उद्गाता। चतुर्थं पादं सर्वे। पुनस्तान् स्तोभान् स एव। ई इति सर्वे। पददेवतानां नानास्तोभाहरणपक्षे प्रथमपादादनन्तरमप्युपायवतः स्तोभान् प्रतिहर्ता ब्रूयात्। एवमुत्तरा अपि भक्तयो द्रष्टव्याः ॥ ३० ॥

## रेवतीषूत्तरयोश्चतुरक्षरौ ॥ ३१ ॥

**रेवतीर्णः सधमाद** (आ. गा. २. ६. ७२-७३) इत्यनयोः प्रथमं साम रेवत्यः। लिङ्गात्। **संख्यानादेशे वर्गाद्यम्** (प्र. हा. सू. २. ८) इति वचनाच्च। तासामृषिः प्रजापतिः। स पुरस्तात् स्तोभद्व्यक्षरः प्रस्तावः। जाराया

---

1. B[2]. वाश्वादीन्, A. वाश्यादीन्, O. वाग्यादीन् for वागादीन्.

9. O. after अन्यथा, adds हि.

16. S[1]. om. अपि.

19. O. उत्तरयोः for अनयोः.

एवोदूहेन प्रथमद्वितीयस्वरापन्नत्वात् । उत्तरयोर्द्वितीयतृतीययोः पादयोरादितश्चतुरक्षरौ प्रतिहारौ । इहकारा इडाश्च निधनानि । अत्र ब्राह्मणम्—रेवत्यो भवन्ति । षण्णिधनाः षड्रात्रस्य धृत्यै (तां. ब्रा. १३. ९. १४-५) इति ॥ ३१ ॥

उच्चा शाक्वरवर्णम् । तस्योत्तमायां 5
षडक्षरः स्तोभान्तः ॥ ३२ ॥

ए१ऊच्चा२ (आ. गा. २. ६. ७४) इति तृचे गीयमानं शाक्वरवर्णम् । तस्य ऋषिः शाक्वरवर्णः । पर्व प्रस्तावः । उत्तरयोः प्रस्तावो नास्ति । नोत्तरयोराचार्याः । स्मृतेः (ला. श्रौ. सू. ६. १. १३) इति सूत्रवचनात् सन्तनिचतुष्टयविषयत्वात् । उक्तं च—यण्वादीनामप्रस्ताव्या उत्तराः 10 (पु. सू. १०. ११. २२) इति । उत्तमस्तोत्रीयायामुत्तमपादादौ षडक्षरः प्रतिहारः । सिषासन्तो वनामहोइ इति । पूर्वयोः स्तोत्रीययोः प्रतिहारो नास्तीति भावः । तथा च सूत्रम्—अप्रतिहारे पूर्वे स्तोत्रीये शाक्वरवर्णस्य (ला. श्रौ. सू. ७. २. ६) इति । इडेति निधनानि । इट् इडेति च ॥ ३२ ॥

नित्यवत्सास्वतीषङ्गवत् ॥ ३३ ॥ 15

ए१ आया२ (आ. गा. २. ६. ७५) इति नित्यवत्साः प्राजापत्याः । तासु पर्व प्रस्तावः । अतीषङ्गवत् प्रतिहारः । आन्धान्तास्त्रय इत्यर्थः । तद्यथा धारा२ । पृष्ठ१स्यरो २ चताइ१ इति त्रिष्वभ्यासेषु धारेति । इडा । अथा । इडेति निधनानि ॥ ३३ ॥ 19

---

1. O. आद्यौ for आदितः.
8. M. after भवन्ति, adds : प्रतिष्ठायै.
9. O. वचनम् for वचनात्.
11. O. °स्तोत्रीयार्थम् for °स्तोत्रीयायाम्.
14. M. before च, adds : निधनानि.
18. M. before इडा, adds : इट्.

23

## पञ्चाक्षरो रथन्तरे ॥ ३४ ॥

**आभित्वा शूर नोनुमोवा** (आ. गा. २. ६. ७६) इति **रथन्तरम्** । तस्य वसिष्ठः ऋषिः । **वसिष्ठस्य च रथन्तरम्** (आ. ब्रा. ६. ६. १०) इति [श्रुतेः] । तस्य प्रथमायां पादः प्रस्तावः । उत्तरयोर्द्व्यक्षरः । अत्र ब्राह्मणम्—
5 **वागित्यादेयम्** (तां. ब्रा. ७. ७. ९) इति । आदानमुद्गीथारम्भः । तत्र **वागोङ्कारात् पूर्वेति** सूत्रकारस्य मतम् । **वागित्यादेयमिति** देशविपर्ययमात्रमिति वचनात् । निदानकारस्त्वाह—**उत्तरा वाक् जघन्यविधेयादाचाराच्च** (नि.सू. २. १३. ३४) इति । अत्र संहितोपनिषत् भवति—**रथन्तरेऽन्वक्षरं भकारान् ॥ स्वरवन्ति व्यञ्जनानि यथाक्षरं दर्शयेत् ॥** (सं.उ.ब्रा.२.
10 १८-१९) इति । अयमर्थः । **रथन्तरे** प्रत्यक्षरं भकाररूपाणि **व्यञ्जनानि यथाक्षरं स्वरवन्ति** तस्य तस्याक्षरस्य यः स्वरः अकारादिस्तद्युक्तानि **दर्शयेत्** । वाचोच्चारयेदुद्गाता । आर्चिकानि तु अक्षराणि मनसा ध्यायेदित्यर्थः ॥

एतदुक्तं भवति । अत्र भकाराणां व्यञ्जनत्वकीर्तनम् । **तद्यथा स्वरेण सर्वाणि व्यञ्जनानि व्याप्तानि** (सं. उ. ब्रा. २. २०) इत्यादि वक्ष्यमाणार्थ-
15 वादार्थम् । अयं च भकारनिवेशः प्राक् प्रतिहारात् चतुरक्षरमवशिष्य कर्तव्यः । कुत एतत्? **प्रस्तूयमाने संमीलेत् । स्वर्दृशं प्रतिवीक्षेत । नैनं चतुर्जहाति**
17 (तां. ब्रा. ७. ७. १५) इति ब्राह्मणे स्वर्दृशमित्यस्य चतुरक्षरस्य प्रतिहारात् पूर्वस्य

---

3. AB¹B². om. तस्य वसिष्ठ ऋषिः.

5. M. आगेयम् for आदेयम् ; S¹. आदौ न for आदानम् ; O. उद्गीथादौ अत्र for उद्गीथारम्भः । तत्र.

8. AB¹B²M. om. भवति.

10. M. om. अयमर्थः ।...स्वरवन्ति ।

12. S¹. om. तु.

13. O. व्यञ्जनवच्च for व्यञ्जनत्व.

14. O. पूर्वं for अयं च.

16 & 17. MAS¹S². स्वदृशम् for स्वर्दृशम्.

दर्शनहेतुत्वकथनेन साक्षादुच्चारणप्रतीतेरिति। सूत्रकारस्तु शाखान्तरोक्तं प्रकारान्तरं भकारनिवेशं दर्शितवान्। **एकैकं मनसाक्षरं स्तोभैर्वाचा युगपत् संयुज्यात्। भकारादिभिरकारान्तैरक्रान्तैः प्रथमस्वरैरुत्तमो द्वितीयस्वरः प्राक् प्रतिहारात् चतुरक्षरं शिष्ट्वा** (द्रा. श्रौ. सू. ६. १. १६-७) इति। भकारादिभिरकारान्तैः भ भ भ भेत्येवंरूपैः अक्रान्तैरविलम्बितैरित्यर्थः। तत्र 5
निदानसंहितोपनिषदुक्तप्रकाराश्रयेण प्रथमाया उद्गीथो यथा ओं वाक् भा भु भाभि भ भे भ भ भी भा भ भ भ भ भ भः। सुवाऽ२३र्द्दशामिति। द्वितीयायास्तु ओं वाक् भाभि भ भु भु भो भ भा भा भ भो भि भि भो। न पाऽ२३र्थिवाः इति। अथ तृतीयायाः ओं वाक् भो भ भभि भ भे भ भा भ भो भ भ भि। द्रवाऽ२ जिनाः इति। सर्वासामुत्तमपादादौ **पञ्चाक्षरः** प्रतिहारः। अस् 10
इति निधनम्। **तस्यापृष्ठस्य सतो निवर्तेरन् धर्माः सहस्तोभैरिति गौतमः** (द्रा. श्रौ. सू. ६. १. १९-२०) इत्यादिसूत्रमत्रानुसंधेयम्॥ ३४॥

## सप्तहम्॥ ३५॥

**अयं वा याउ। त्वामिद्धाइ** (आ. गा. २. ६. ७७) इति जमदग्नेः **सप्तहम्**। तत् सस्तोभपदविभाग्यम्। **ए**। **त्रिवृतम्** इत्यादिनिधनम्॥ ३५॥ 15

## सामनी त्वयणामाद्ये॥ ३६॥ 16

---

1. O. दृश्य° for दर्शन°.
2. B[1]. निवेशनं for निवेशं.
3. O. om. अक्रान्तैः.
5. M. अत्र for तत्र.
6. M. प्रथमायां for प्रथमायाः.
9. O. om. अथ ; M. भो भा भ for भो भ भ ; M. तृतीयायां for तृतीयायाः.
11. A. भैः for स्तोभैः.
16. M. महासामनी for सामनी.

कास्—अभ्या भूः—कक्षुरो—प्रयच्चक्रम् (आ. गा. २. ७. ८१-८३) इत्येषां त्रयाणामाद्ये सामनी सामसंज्ञके । ते सस्तोभपदविभाग्ये । रुद्रस्तयोः ऋषिः । प्रथमस्य ए अ (ह ?) स् इत्यादि निधनम् । द्वितीयस्य हस् [स्थि] प्रहस् इत्यादि । अनयोः संदंशवज्रे च विशेषोक्त्यैव विनियोगः ॥ ३६ ॥

5 कयापञ्चनिधनं वामदेव्यम् ॥ ३७ ॥

होवा ३ हा ३ कया न (आ. गा. २. ७. ८५) इति पञ्चनिधनं वामदेव्यम् । पञ्चनिधनम् अन्वर्थविशेषणम् । सस्तोभपदविभाग्यम् । तस्य ऋषिर्वामदेवः । त्रिकद्रुके च भक्तय उदाह्रियन्ते । होवाहा इत्यादि होवान्तं सोपायं स्तोभं प्रस्तोता ब्रूयात् । इहप्रजामिति सर्वे । पुनः
10 होवा ३ हा ३ इत्यादि एहियाहाउ इत्यन्तं निरुपायं स्तोभं स एव । त्रिकद्रुकेष्विति षोडशाक्षरं च । होवा ३ हा ३ इत्यादिकं सोपायं स्तोभमुद्गाता । रायस्पोषायेति सर्वे । पुनर्निरुपायं स्तोभं स एव । त्रिम्पत्सोमित्यादि । अथ सोपायं स्तोभं प्रतिहर्ता । आगन्वाममीति सर्वे । पुनर्निरुपायं स एव । स ई ममादेत्यादि च । अथ पुनः सोपायं स्तोभमुद्गाता । इदं वामामिति सर्वे ।
15 पुनर्निरुपायं स एव । सैनं सश्चदित्यादि च । पुनः सोपायं स एव । चराचरायेति सर्वे । एवमुत्तरयोरपि ॥ ३७ ॥

पिबावैराजम् । तस्य तृतीये
मध्यमोऽभ्यासः सस्तोभः ॥ ३८ ॥

19 इति श्रीकात्यायनविरचिते प्रतिहारसूत्रे एकादशः खण्डः ॥ ११ ॥

---

2. M. om. सामसंज्ञके । ते ; O. °संज्ञे for °संज्ञके ; O. om. ते.

4. M. after इत्यादि, adds : निधनम्.

5. O. after °देव्यम् ।, adds : पञ्चनिधनम्.

7. O. अद्य for अन्वर्थ°.

11. O. before होवा, adds अथ.

**हो इया पिबा** (आ. गा. २. ७. ८६) इति **वैराजम्। वसिष्ठस्य महावैराजम्** (आ. ब्रा. ६. १. ६. १५) इति श्रुतेः। ननु च **पिबेति** प्रतीकोपादानं किमर्थम्? यावता इदन्ताप्रत्ययः क्रमादेव सिद्धः। उच्यते। वैराजमित्येव तावदुक्तौ कयापञ्चनिधनमित्यनेन वीहाकयेत्यस्योपादानं शङ्क्येत। **पिबावैराज**मिति वचनात्तु ततः पूर्वस्य **होवाहा कयान** इत्यस्यैव कयापञ्च- 5
निधनमित्यनेनोपादानमिति सिद्धं भवति। वैराजस्य स्तोभादिद्व्यक्षरः प्रस्तावः। **यौक्ताश्वैडायास्य** (पु. सू. १०. ११. १) इत्यादि वचनात्। तृतीये पादे **हाउहाउहाउ। औहोइ** इत्यादि पुरस्तात्स्तोभयुक्तो मध्यमोऽभ्यासः प्रतिहारः। तथा च सूत्रम्—**मध्यमं वचनं पुरस्तात्स्तोभं वैराजस्य** (ला. श्रौ. सू. ७. ७. २७) इति। अस्योत्तरयोरपि योनिवत् स्तोभनिवेशः॥ ३८॥ 10

इति श्रीवामनार्यसुतवरदराज-विरचितायां दशतयीवृत्तौ
प्रतिहारसूत्रव्याख्यायाम् एकादशः खण्डः॥ ११॥

**प्रथमं पर्व समाप्तम्॥** 13

---

1. In आर्षेयब्राह्मण इन्द्रस्य महावैराजम्। वसिष्ठस्य वा for वसिष्ठस्य महावैराजम्.

3. S[2]. असिद्धः for एव सिद्धः;

4. O. तावत्युक्ते for तावदुक्तौ.

9. S[1]S[2]. °स्तोभो for स्तोभं.

## आरण्यके द्वितीयं पर्व[1]

# द्वादशः खण्डः

### द्वन्द्वाद्ये प्राणापानौ ॥ १ ॥

अरण्येगेयेषु क्रमादर्कद्वन्द्वव्रतसंज्ञानि त्रीणि पर्वाणि । तत्र द्वन्द्वस्य
5 द्वितीयस्य पर्वणः आद्ये सामनी प्राणापानौ । वसिष्ठस्य प्राणापानौ द्वौ
(आ. ब्रा. ६. २. १. १) इति । अनयोः महाव्रते परिमात्सु विनियोगः ॥ १ ॥

### पञ्चमषष्ठे व्रतपक्षौ ॥ २ ॥

द्वन्द्वस्य पञ्चमषष्ठे सामनी व्रतपक्षौ । कहिंकइहाहिम्—इन्द्रन्नरः
(आ. गा. २. १. ९४-९५) इति । तयोः प्रजापतिः ऋषिः । परिमात्सु
10 प्रवर्ग्ये च विनियोगः ॥ २ ॥

### उपत्वाजा बलभिदी ॥ ३ ॥

होवाइ—ओवा—उपत्वा (आ. गा. २. १. ९८-९९) इत्येते
बलभिदी सस्तोभपदविभाग्ये । ऋषिस्तयोर्बृहस्पतिः । उद्भिद्बलभिदोरनुपूर्वं
विनियोगः ॥ ३ ॥

15 ### भर्गयशसी ॥ ४ ॥

हाउ धामयत् । बृहत् कयशोतवे (आ. गा. २. २. १००-१०१)
इति भर्गयशसी प्राजापत्ये । तयोर्भर्गः सस्तोभपदविभाग्यः । ए ३ । भर्गा
२३४५ः इति निधनम् । यशः सस्तोभपदविभाग्यम् । आयुर्विश्वायुरित्यादिकं
19 तस्य निधनम् ॥ ४ ॥

---

1. O. om. whole of the द्वादशः खण्डः and in the thirteenth Khanda upto तदैवात्तोपा° (p. 191, L. 15).

18. O. स्तोभपदविभाग्यम् for सस्तोभपदविभाग्यम्.

## प्रसोमदेववीतय इति घर्मस्य तन्वौ ॥ ५ ॥

कप्रसोम—औहो ३ वा (आ. गा. २. २. १०४-१०५) इति घर्मस्य तन्वौ । तयोर्धर्म ऋषिः । प्रवर्ग्ये विनियोगः ॥ ५ ॥

## वार्षाहरे त्वमेतत् ॥ ६ ॥

हाउत्वमेतात्—त्वमेतद्धोहाइ (आ. गा. २. २. १०९-११०) इति वार्षाहरे वृषाहरिणा दृष्टे इति । तयोराद्यस्य आर्षासोमद्युमत्तम इत्यत्र पर्व प्रस्तावः । अग्निन्दूतास्वरत्वात् । सीदन्योनौ इति न्याय्यः प्रतिहारः । सामपूर्वग्रहणात् । अभिस्फूर्जायं द्रिष्मः इति निधनम् । द्वितीयस्यापि यस्ते मद इत्यत्र पर्व प्रस्तावः । सोमसामगायत्रीक्रौश्च (पु. सू. १०. ११. ७) इत्यादिवचनात् । ततः परस्तु होइकार उद्गीथाङ्गम् । विधाद्यत्वात् । हाइदा इवा वाइरा इति न्याय्यः प्रतिहारः । समोषाभिस्फूर्जायं द्रिष्मः इति निधनम् । अनयोः श्येनादिषु माध्यंदिनाभवयोरनुपूर्वं प्रयोगः ॥ ६ ॥

## तौरश्रवसे यदिन्द्रशा ॥ ७ ॥

यदिन्द्रशासो अव्रातम् (आ. गा. ३. ३. ११६-११७) इत्येते तौरश्रवसे तुरश्रवसा दृष्टे इति । तयोराद्यस्य न्याय्यः प्रतिहारः । सामपूर्वग्रहणात् ॥ ७ ॥

उत्तरस्यापि न्याय्यप्रतिहारत्वे प्राप्तेऽपवादमाह—

## उत्तरेऽष्टाक्षरो नानापद्यः ॥ ८ ॥

तृतीयपादान्त्यं चतुरक्षरं चतुर्थपादाद्यं चतुरक्षरं चेत्येतन्नानापद्योऽष्टाक्षरः प्रतिहारः । तद्यथा पुरूस्पृ १ हा २ म् । वसाऽ्या १ या २ । उवा ३ । ओ

6. S[1]. °हरेण for °हरिणा.

17. M. °हारे for हारत्वे.

19. AB[1]B[2]. °पादाद्यं for °पादान्त्यं ; B[1]. om. चतुरक्षरं ; S[1]S[2]. एतावन् for एतन्.

३ वा २ ३ । इत्येते च संस्तुतसोमे माध्यंदिनार्भवयोर्विपर्यस्य विनियुज्येते अजामित्वाय ॥ ८ ॥

## धेनुपयसी ॥ ९ ॥

कौहास्वादि (आ. गा. ३. ३. ११८) इति धेनु । तस्य ऋषिः प्रजापतिः । प्रवर्ग्यप्रकरणे सूत्रम् — धेनुमुपसृजन्ति । तद्धेनु । तस्य 5 देवतासु सोपायं स्तोभमाहरेत् (द्रा. श्रौ. सू. २. २. २९-३०) इति ॥

इ२यो ३ अग्ने (आ. गा. ३. ३. ११९) इति पयः प्राजापत्यं सस्तोभ-पदविभाग्यम् । तस्य स्तोभादिरभ्यस्तः प्रथमः पादः प्रस्तावः । एवं तृतीयः पादः प्रतिहारः आ१ २ इत्यादि निधनम् ॥ ९ ॥

## 10 चतुर्थ्यां यण्वापत्ययोरुत्तरयोः स्तोत्रीययोर्द्वितीये सस्तोभे ॥ १० ॥

चतुर्थ्यां दशतिप्रथमद्वितीये इन्द्रमिद्धा—कउच्चा (आ. गा. ३. ४. १२२-१२३) इत्येते सामनी यण्वापत्ये तयोरुत्तरयोः स्तोत्रीययोः द्वितीयौ पादौ पुरस्तात्स्तोभौ । सस्तोभे इति द्विवचनस्याप्यार्षी संहिता । अथवा 15 नार्षी । अथवा प्रथमायास्तु प्रतिहारो नास्ति । तथा च सूत्रम् —कार्तयशसं स्वरं पयोनिधनम् । ऋषभः शाकरो यण्वापत्ये । तेषाममुपोत्तमं पादं 17 पुरस्तात्स्तोभा उत्तमानां त्रयाणां प्रतिहाराः प्रथमा स्तोत्रीया

---

5. A. °करणे, B². °कारेण for °प्रकरणे ; M. after प्रकरणे, adds : तथा च ; B². धेनुं for धेनु.

6. S¹S². इत्यादि for इति.

14. B¹. आदि सहता, S¹S². आर्षि संहिता for आर्षी संहिता.

15. B¹. नार्षि for नार्षी ; S¹S². om. अथवा ; AB¹B². om. कार्तयशसं ... तत्र (P.185, L.1).

17. S¹S². °स्तोभ for °स्तोभा.

यण्वापत्ययोरिति। तत्र यण्वस्य अर्षासोमद्युमतम (सा. ९९४-९९६) इत्यत्र भक्तयः। यथा वान्तः प्रस्तावः। उत्तरयोर्नास्ति। द्वितीयायाम् औहोवेत्यादिस्तोभोपक्रमो वरुणाय मरुद्भ्य इत्ययं पादः प्रतिहारः। एवं तृतीयायामस्मभ्यं सोम विश्वत इति ईडा इट् इडेति निधनानि॥

अपत्यस्य स्तोभादिः पादः प्रस्तावः। उत्तरयोर्नास्ति। हाउहाउहाउ। वरुणायमरुद्भ्रियाः इति द्वितीयायां प्रतिहारः। एवमस्मभ्यं सोमवाइश्वाताः इति तृतीयायाम्। पूर्ववन्निधनानि॥ १०॥ 5

## आयुर्नवस्तोभे॥ ११॥

खविश्वतोदावन्—विश्वतोदावन् (आ. गा. ३. ४. १२४-१२५) इत्येते आयुर्नवस्तोभे प्राजापत्ये महाव्रते। ब्राह्मणम्—आयुर्नवस्तोभाभ्यां सद उपतिष्ठन्ते (तां. ब्रा. ५. ४. १२) इति। तत्रायुषः पादद्वयम्। आयुः सुवः ज्योतिरिति च निधनानि। नवस्तोभस्य प्रथमपादाभ्यासः द्वितीयपाद इडासुवाज्योतिरिट् इडेति च निधनानि। केचिदनयोः पदनिधनत्वं नेच्छन्ति। तत्र हेतुश्चिन्त्यः॥ ११॥ 10

## रायोवाजीयबार्हद्गिरयोः षडक्षरः स्तोभान्तः॥ १२॥ 15

एस्वादोः (आ. गा. ३. ४. १२६) इति रायोवाजीयम्। रायोवाजस्यर्षेरिदमिति। इन्द्रोमदा (आ. गा. ३. ४. १२७) इति बार्हद्गिरम्। बृहद्गिरिणा दृष्टमिति। तयोः पर्व प्रस्तावः। उत्तमे पादे षडक्षरः स्तोभान्तः प्रतिहारः। तद्यथा वस्वीरनुस्वरा २३ होइ इति रायोवाजीयस्य। संवाजेषुप्रना २३ होइ इति बार्हद्गिरस्य। इडा इट् इडा अथेति निधनानि॥ १२॥ 20

---

7. B[1]B[2]A. निधनम् for निधनानि.

18. A[1]. षडक्षरौ स्तोभान्तौ for षडक्षरः स्तोभान्तः.

## संकृतिनश्चतुर्थे स्तोभाः ॥ १३ ॥

एस्वादोः । इत्थाविषू २३ हो २३ (आ. गा. ३. ४. १२८) इति संकृति देवानामार्षम् । तस्य द्वितीयादीनां चतुर्णां पादानाम् आदितो हा ओवेत्यादयः स्तोभाः अनुषज्यन्ते । **ऊर्ध्वं तु प्रथमात् पादात् संकृतिनः** (ला. श्रौ. सू. ७. ६. १) इति सूत्रवचनात् । चतुर्थपादाङ्गभूताः स्तोभाः प्रतिहारः । पादानां निधनत्वादिति भावः अत्र **पाङ्क्तस्यानुष्टुप्सु द्वितीयं पदं द्वैधं व्यूहेत्** (ला. श्रौ. सू. ७. ९. ११) इत्यधिकृत्य सूत्रम् । **तृतीयं बृहतीष्वष्टाक्षरं चतुरक्षरं च यथा संकृतिन** (ला. श्रौ. सू. ७. ९. १२) इति । तत्र **परीतोषिञ्चतासुतमिति** बृहतीष्वस्य प्रयोगः । यथा पादः प्रस्तावः । **हाओवेत्यादयः** स्तोभाः उद्गीथाङ्गम् । विधाद्यत्वात् । अथवा **एपारि** इति प्रस्तावः । **द्व्यक्षरो वा संकृतिदार्ढ्यच्युतयोः** (पु. सू. १०. १०. ९) इति वचनात् । अस्मिन् पक्षे पादशेषो हाओवेत्यादयश्च स्तोभा उद्गीथाः । द्वितीयः पादो निधनम् । पुनस्त एवा स्तोभाः उद्गीथः । **दधान्वाँ योनयौ अ** इति निधनम् । त एव स्तोभाः प्रतिहारः । **प्सुवन्तश्** इति निधनम् । त एव स्तोभा उपद्रवः । चतुर्थः पादो निधनम् । पुनस्त एव स्तोभा उपद्रवः । **हौऽ २३ । आऽ ३ । ऊऽ ३ । ईऽ २३४५ ।** इति निधनम् ॥ १३ ॥

## पार्थुरश्मे प्रस्तावसदृशाः ॥ १४ ॥

एस्वादोः । ओ २३४ वा (आ. गा. ३. ४. १२९) इति **पार्थुरश्मं** पृथुरश्मिना दृष्टम् । तस्य वान्तः प्रस्तावः । प्रस्तावसदृशाश्चत्वारः प्रतिहाराः । तद्यथा **एमधोः । एयाई । एवृष्णा । एवस्वीः ।** इति । अथकाराणि निधनानि । तानि चान्तःसामिकानि मन्द्रान्तं कर्षेयुः । **अन्ततो निधनसामा-**

---

21. M. after इति, adds : वान्तः प्रतिहारः.

22. $S^{2}$. om. च ; $S^{1}S^{2}$. °सामनिधनानि for °सामिकानि ; $S^{1}S^{2}$. कर्षयेयुः for कर्षेयुः.

न्यादन्तःसामिकानि निधनानि संप्रसारयन्ति (सं. उ. ब्रा. ३. १) इति श्रुतेः ॥ १४ ॥

## श्येने च ॥ १५ ॥

प्रस्तावसदृशा इत्यनुकृष्यते। ऊभाइ (आ. गा. ३. ४. १३०) इति श्येनम्। तस्य पर्व प्रस्तावः। प्रस्तावसदृशाः पञ्च प्रतिहाराः। तद्यथा— आपा। माहा। साम्ना। देवी। भाद्रा। इति। इडेति निधनानि आमन्द्रं कृष्टानि ॥ १५ ॥

## भद्रश्रेयसोरष्टमैः स्तोभैः प्रतिहारः ॥ १६ ॥

इमानुकं भुवनासीषधेमा (आ. गा. ३. ५. १३२-१३३) इत्यस्यां द्विपदायां भद्रश्रेयसी। निधनलिङ्गात्। तत्र भद्रस्य गौतम ऋषिः। श्रेयसः प्रजापतिः। तयोः पादद्वयार्थं निधनार्थं च स्तोभद्वयमाहर्तव्यम्। तत्राष्टमेन त्रिरुक्तेन स्तोभेन प्रतिहारः। पदयोर्निधनत्वम् अष्टमैरिति बहुवचनमभ्यासापेक्षया ॥ १६ ॥

पक्षान्तरमाह—

## पञ्चमाष्टमैर्वा द्वौ चेत् ॥ १७ ॥

यद्येतयोर्द्वौ प्रतिहाराविति मतं तदा पञ्चमेनाष्टमेन च स्तोभेन त्रिरुक्तेन च द्वौ प्रतिहारौ। तत्र भद्रस्यायं प्रयोगः—होइहा। इत्यादयो वान्ताः स्तोभाः प्रस्तावः। प्रथमः पादो निधनम्। इहेति च। त एव स्तोभा उद्गीथः। द्वितीयः पादो निधनम्। इहेति च। इहोइहा इति त्रिरुक्तः स्तोभः

---

12. A. बह्वपेक्षया for बहुवचनमभ्यासापेक्षया.

16. M. मतौ स्याताम् for मतं.

17. A. om. त्रिरुक्तेन च द्वौ ; $B^1B^2$. om. च द्वौ ; $AB^2$. स्यात् for भद्रस्य ; M. प्रतिहारः for प्रयोगः.

19. $B^1$. om. इहेति च ; $B^2B^1S^1S^2$. after इति च, add पुनश्च होइहेति त्रिरुक्तः स्तोभः उद्गीथः and $S^2$. प्रतिहारः for उद्गीथः.

प्रतिहारः । द्विप्रतिहारत्वपक्षे पञ्चमोऽपि स्तोभः प्रतिहारः । ए३ । भद्रम् इति निधनम् । एवं श्रेयसोऽपि द्रष्टव्यम् ॥ १७ ॥

**वार्कजम्भे प्रव इन्द्रा ॥ १८ ॥**

**हाउ प्रव इन्द्राय—कविश्वेषाम्** (आ. गा. ३. ५. १३८-१३९)
5 इत्येते **वार्कजम्भे** वृकजम्भेन दृष्टे इति । तयोराद्यस्य न्याय्यः प्रतिहारः । सामग्रहणात् । **पुनानः सोमधारयेत्यत्र अभिसोमास आयव** इत्यत्र च सर्वबृहतीकारः ककुबुत्तरकार इति पक्षद्वयम् ऊहाध्ययनसिद्धम् । उक्तं च त्वन्नो वार इत्यादि ॥ १८ ॥

पूर्ववदुत्तरस्यापि न्याय्यप्रतिहारत्वं प्राप्तमपवदति—

10 **उत्तरं विभाग्यम् ॥ १९ ॥**

सस्तोभपदविभाग्यमेतत् । अनयोश्च विशेषोक्त्यैव विनियोगः ॥ १९ ॥

**नाके यामं परिमात्सु ॥ २० ॥**

**औहोइ । नाकेसुपर्णम्** (आ. गा. ३. ६. १४४) इति यामम् । तदेव **परिमात्सु** प्रयुज्यते । **यामेन मार्जालीयमुपतिष्ठते** इति । न तु
15 यामान्तरम् ॥ २० ॥

**प्रथश्च वसिष्ठस्य शफौ । शुक्रचन्द्रे ॥ २१ ॥**

**प्रथश्चयस्य** (आ. गा. ३. ६. १४६-१४७) इत्येतौ **वसिष्ठस्य**
18 **शफौ** । तयोर्वसिष्ठ ऋषिः ॥

---

8. **M. combines the Sutras 18 and 19 reads as :—**
वार्कजम्भे प्रव इन्द्रोत्तरं विभाग्यम्.

9. **M.** प्रव इति **for** अपवदति.

11. **B². om.** सस्तोभपदविभाग्यम्.

14. **S¹S².** विनियुज्यते **for** प्रयुज्यते.

16. **M.** प्रथमः, **B¹B².** पृथः **for** प्रथः.

कशुक्रं नियुत्वा—कचन्द्रमत्र (आ. गा. ३. ६. १४८-१४९) इति शुक्रचन्द्रे। ऋषिः प्रजापतिः। शुक्रस्य चन्द्रस्य चन्द्र (चे?) इत्येके। तेषां प्रवर्ग्ये विनियोगः ॥ २१ ॥

स्वराणि यज्ञा चत्वारि ॥ २२ ॥

यज्ञायथा (आ. गा. ३. ७. १५०-१५३) चत्वारि सामानि स्वरसंज्ञकानि। वायोः षट् स्वराणि वा (आ. ब्रा. ६. ७. १) इति [ब्राह्मणम्]। तेषां न्याय्यः प्रतिहारः। सामपूर्वग्रहणात्। तत्र प्रथमस्य एयज्ञायथाः इति प्रस्तावः। तदस्तभ्नाः। हाउ इति प्रतिहारः। अस् पया २३४५ः इति निधनम्। द्वितीयस्य एहाउयज्ञायथाः इति प्रस्तावः। तदस्तभ्नाः। होइ [त्रिः]। हाउ [त्रिः] इति स्तोभान्तः प्रतिहारः। हस् पया २३४५ः इति निधनम्। तृतीयस्य स्तोभादिः पादः प्रस्तावः। तत उपरितनः स्तोभ उद्गीथादिः। विधाद्यत्वात्। होवा २३ होइ। तात्। अस्तभ्ना इति प्रतिहारः। सप्तानां पुरस्ताद् (प्र.हा.सू.९.६) इत्यादिवचनात्। हस् इडापया २३४५ः इति निधनम्। चतुर्थस्य याज्ञायाज्ञा इति प्रस्तावः। अभ्यस्तो द्व्यक्षरः (पु. सू. १०. ११. २) इत्यादिवचनात् ॥ २२ ॥

अस्यापि न्याय्यप्रतिहारत्वे प्राप्ते आह—

उत्तमे स्वरे विभाग्यः प्रतिहारः ॥ २३ ॥

इति श्रीकात्यायनविरचिते प्रतिहारसूत्रे द्वादशः खण्डः ॥ १२ ॥

---

2. B[1]B[2]. A. om. शुक्रचन्द्रे; M. इन्द्रः for चन्द्रः.

6. AB[1]. om. स्वराणि.

10. M. om. होइ [त्रिः]। हाउ [त्रिः].

13. B[1]. om. वचनात्; M. अत्र विभाग्य इत्यनेन उपोत्तमं पदमित्यर्थः for सप्तानां पुरस्तादित्यादिवचनात्.

17. S[1]S[2]. before उत्तमे adds: उत्तमे स्वरे विभाग्यः।

अत्र **विभाग्य** इत्यनेनोपोत्तमं पदमित्यर्थो विवक्षितः। न तु सर्वमेव साम विभाग्यमिति। **उत्तमं विभाग्य**मिति वचनात्। प्रस्तावस्य वैषम्यकथनाच्च। सूत्रकारश्चाह—**कार्तयशसं स्वरं पयोनिधनमृषभः शाक्करो यण्वापत्ये तेषामुपोत्तमं पदम्** (द्र. श्रौ. सू. ) इति। ए ३ (२ ^) । पया २३४५ः (१ १ १ १ १) इति निधनम्। एषां चार्षेयकल्पे सविशेषणानामेवोपादानाद् विषयनियमः सिद्धः। अथ यानि विष्णोस्त्रीणि स्वरीयांसि पञ्चानुगानं द्विरनुगानं चतुरनुगानमिति तेषामत्रानुपादानात् प्रवर्ग्ये प्रयोगः प्रत्याख्यातो द्रष्टव्यः ॥ २३ ॥

इति श्रीवामनार्यसुत-वरदराज-विरचितायां दशतयीवृत्तौ
प्रतिहारसूत्रव्याख्यायां द्वादशः खण्डः ॥ १२ ॥

## द्वितीयं पर्व समाप्तम् ॥

---

1. B[1]MS[1]S[2]. विभाग्यम्, B[2]. विभाग्ये for विभाग्यः.
2. M. adds: अस्य before वचनात्.

# त्रयोदशः खण्डः

## सत्रस्यर्द्धि चतुर्थम् ॥ १ ॥

व्रतस्य तृतीयपर्वणश्चतुर्थम् **औहोवा अगन्मज्योतिः** (आ. ४. १. १७०) इत्येतत् साम **सत्रस्यर्द्धि** । तस्य ऋषिः प्रजापतिः । विश्वेदेवा इति केचित् । तस्य परिसामत्वेन विनियोगः । तत्र परिमात्सु प्रयोगे **अगन्मज्योति**-रित्यादीनि देवतापदानि निधनानि । तेभ्यः प्रत्येक**मौहोवे**त्यादि स्तोभेत् । **सुवर्ज्योति**रिति निधनम् । यावदुच्छ्वासमावर्तयेयुः परिमाद्भ्योऽन्यत्र यथाम्नायं प्रयोगः ॥ १ ॥

## अन्त्ये सोमव्रते ॥ २ ॥

प्रथमायां दशतोऽन्त्ये **ओवा २ सन्तेपया—कहौवा ३ त्वमिमा** (आ. गा. ४. १. १७५-१७६) इत्येते सोमव्रते । अत्र सूत्रम्—**अग्नीषोमौ तत्रोभयोर्व्रते** (द्रा. श्रौ. सू. २. २. ४२) इति । अग्नेर्व्रतं सोमव्रतं च गायेदित्यर्थः । तत्रानयोः सोमव्रताग्नेर्व्रतयोर्विकल्पेन प्रयोगः । यदि **हयोपासन्ते पयांसी**त्येतदेव प्रयोज्यमभविष्यत् तदा तदेवात्रोपादातव्यं स्यात् ॥ २ ॥

## सार्पराज्ञीष्वग्निमीडे यामम् ॥ ३ ॥

**मनोहाउ । अग्निम् । ईडा २ इ** (आ. गा. ४. २. १७९) इति **यामम्** । तच्च **सार्पराज्ञीष्वायंगौ**रित्येतासु प्रयुज्यते । नात्र यामान्तरम् । न चैतदन्यत्रेत्यर्थः । तत्र दीक्षितोपतापप्रायश्चित्ते ब्राह्मणम्—**यामेन स्तुवन्ती**त्यारभ्य **सर्पराज्ञ्या ऋग्भिः स्तुवन्ति** (तां. ब्रा. ९. ८. ४-७)

---

12. M. before अत्र adds : प्रणयन्ति.
13. AB[1]B[2]. om. सोमव्रतं.
15. O. om. up to तदेवात्रोपा. see f.n. 1, p 182
18. O. om. च ; O. अतः for अत्र.

इति। कल्पश्च—**उत्तरेण मार्जालीयं दक्षिणामुखा आसीना यामेन स्तुवीरन् सार्पराज्ञीष्वग्निमीडे पुरोहितम् इति यस्य योनिः** (क्षु. क. १. ११. ३) इति। तस्य स्तोभादिः पादः प्रस्तावः ॥ ३ ॥

तस्य प्रतिहारमाह—

5 **तस्य तृतीये कृष्टान्तः ॥ ४ ॥**

तृतीये पादे कृष्टान्तं पर्व प्रतिहारः। र१र रा २३ इति। सूत्रकारस्तु न्याय्यप्रतिहारत्वमस्य मन्यते। **न्याय्यप्रतिहाराणामिडानां संक्षार** (ला. श्रौ. ६. ११. ३) इत्यादिसूत्रे **अग्निमीडयायामस्येयुक्तत्वात्** ॥ ४ ॥

**इमा उवामित्यश्विनोर्व्रते ॥ ५ ॥**

10 **होइहा। इमाउवाम्** (आ. गा. ४. २. १८१-१८२) इत्येते **अश्विनोर्व्रते** सस्तोभपदविभाग्ये। तयोः प्रथमस्य ईहीत्यादि निधनम्। द्वितीयस्य **ई २** इति त्रिरुक्तम् ॥ ५ ॥

**गामुत्तरे ॥ ६ ॥**

ताभ्यामुत्तरे **कगावोहाउ तेमन्वत—खाग्निमीडे** (आ. गा.

15 ४. २. १८३-१८४) इत्येते **गवांव्रते।** तयोराद्यं सस्तोभपदविभाग्यम्।
**ए। गावोवृषभपत्नीरित्यादि** त्रिरुक्तं निधनम्। द्वितीयं स्तोभविभाग्यम्।

17 तस्य पदानि निधनानि। **देवेषु निधिमा२ऊहम्** इति च ॥ ६ ॥

---

4. $S^1S^2$. om. तस्य.

7. O. न्याय्यत्वं for न्याय्य° and om. अस्य; $AB^1B^2$. before न्याय्य° add: तथा and O. तथा च.

8. $AB^2$. अग्निमीयामस्वि ($B^2$. °स्वी) त्यपि, M. अग्निमीडायाः तस्यापि° for अग्निमीडायामस्येति; $AB^1B^2$M. उक्तवान् for उक्तत्वात्.

16. M. द्वितीये स्तोभपदविभाग्यं for द्वितीयं स्तोभविभाग्यम्.

## समन्यायन्तीत्यपांव्रते ॥ ७ ॥

**कैरयत्-कैरयन्-समन्या** (आ. गा. ४. ३. १८९-१९०) इत्येते **अपांव्रते** सस्तोभपदविभाग्ये । तयोराद्यस्य ए । अग्निःशिशुकः इत्यादि निधनम् । ई २३४५ इति द्वितीयस्य । एषामश्विनोर्व्रतादीनां त्रयाणां द्वन्द्वानां विशेषोपादानेनैव विनियोगः ॥ ७ ॥ 5

## उत्तरे अहोरात्रयोः ॥ ८ ॥

अपांव्रताभ्यामुत्तरे **खप्रागन्यत्** **उदुत्यम्-होइआप्रागात्**-इत्येते **अहोरात्रयोर्व्रते** । अहः पूर्वम् । रात्रेरुत्तरम् । अनयोः प्रवर्ग्ये विनियोग उक्तः- **हुतेऽश्विनोर्व्रते । अहोरात्रयोर्वा** । (ला.श्रौ.सू.१.६.३८) इति ॥ ८ ॥

## चतुर्थ्यन्त्ये राजनरौहिणके ॥ ९ ॥ 10

चतुर्थ्या दशतोऽन्त्ये **हिम् कआइही-इन्द्रन्नरः** (आ. गा. ४-४. २०५-२०६) इत्येते **राजनरौहिणके । इन्द्रस्य राजनरौहिणे द्वे** (आ. ब्रा. ६. ४. ८) इति [ब्राह्मणम्] ॥ ९ ॥

तत्र राजनस्य प्रतिहारमाह—

## राजने तृतीयं सस्तोभम् ॥ १० ॥ 15

तृतीयः पादः पुरस्तात् सस्तोभः स्तोभसहित इत्यर्थः । अत्र सूत्रम्— **सर्वाणि राजने त्रिरुक्तानि पञ्चकृत्वो ब्रूयुः । तस्यानुपदं स्तोभाः पदेन प्रस्तावः । तृतीयेन पदेन पुरस्तात्स्तोभेन प्रतिहारः । विभाग्यं वा । तत्र देवताभ्यो यद्यनन्तरं पूर्वं पदं तेन सहैना ब्रूयुः । व्यवस्तोभेत्** 19

---

1. $B^{1-2}S^{1-2}$. om. व्रते.
8. M. after विनियोगः, adds : इति ; O. om. उक्तः.
16. $AB^2$. स पुरस्तात् स्तोभः for पुरस्तात् सस्तोभः.
17. $MB^1B^2$. स्तोभः for स्तोभाः ; M. पादेन for पदेन.
18. M. पादेन for पदेन.

पददैवतमित्येके (ला.श्रौ.सू.७.६.२०-२५) इति । तत्रास्य तदिदासतृचे प्रयोग उच्यते । हिमित्यादीन् त्रिरुक्तांश्च स्तोभान् तदिदासेति पादं च पञ्चकृत्वः पञ्चकृत्वः प्रस्तोता ब्रूयात् । वयो बृहदिति देवतापदम् । विभ्राष्टये विधर्मणे इति च पञ्चकृत्वः सर्वे । अथ तान् स्तोभान् द्वितीयं च पादं तथैवोद्गाता । सत्यमोजः । रजस्सुवः इति देवतापदं तथैव सर्वे । अथ तान् स्तोभान् सद्यो जज्ञान (शूरो नृषात ?) इति पादं च तथैव प्रतिहर्ता । भद्र॒ सुधा । इषमूर्जमिति तथैव सर्वे । पुनः तानेव स्तोभान् चतुर्थं च पादं तथैवोद्गाता । अथ सर्वे बृहद्यशः इति पञ्चकृत्वः । दिविदधे ३ हस् इति चतुःकृत्वः । दिविदधे ३ इति सकृद् ब्रूयुः । हाउवा इत्युद्गाता । वागीडेत्यादि सर्वे । एवमुत्तरयोरपि । अयमविभाग्यपक्ष उक्तः ॥

विभाग्यपक्षे तु न देवतापदानामन्तर्निधनत्वम् । अपि तु हिमित्यादयः स्तोभाः प्रथमपादो वयोबृहदित्यादिके च देवतापदे प्रस्तावः । उक्तं च सदेवतो वा राजनऋषभशाक्करयोर् (पु. सू. १०. १०. ११) इति । एवमुत्तरा अपि भक्तयो द्रष्टव्याः ।

अथ पक्षान्तरम् । पदानां देवतानां च पृथक् स्तोभहरणं कर्तव्यमिति । तत्र प्रस्तोता प्रथमपादान्तं पूर्ववदुक्त्वा पुनः स्तोभान् देवते च तथैव ब्रूयात् । एवं भक्त्यन्तराणि द्रष्टव्यानि । अस्मिन् पक्षे हिमित्यादयः पञ्च स्तोभाः प्रस्तावे दश संपद्यन्ते । एवमुद्गीथप्रतिहारोपद्रवेष्वपि दश दशेति चत्वारिंशत्

---

1. AB[1]B[2]S[1]S[2]. om. तत्र ; M. om. तत्रास्य.
2. M. त्रिरुक्तान् पञ्चकृत्वः स्तोभांस्तदिदासेति च पञ्चकृत्वः, AB[1]B[2]. त्रिरुक्तान् पञ्च स्तोभान् तदिदासेति पञ्च पञ्चकृत्वः for त्रिरुक्तांश्च ... पञ्चकृत्वः पञ्चकृत्वः. (L. 3.)
4. AB[1–2]. repeat पञ्चकृत्वः twice
6. O. om. तथैव ... पादं (L. 7).
9. S[1]S[2]. before दिवि add :—चतुरक्षरा.
10. O. om. एवमुत्तरयोरपि.
11. M. अत्र for अपि तु ; O. हुम् for हिम्.
12. B[1]MB[2]S[1]S[2]. देवसे, A. देवव्रते for देवतापदे.
17. O. हुम् for हिम्.
18. A. प्रस्तावोद्देशाः for प्रस्तावे दश.

स्तोभाः । राजनस्तोत्रस्य च पञ्चविंशस्तोभ इति चत्वरिंशतः पञ्चविंशत्या गणने स्तोभसहस्रं संपद्यते । तथा च राजनमधिकृत्य ऐतरेयकब्राह्मणम् (आरण्यकम् ?)—
**पञ्चकृत्वः प्रस्तौति । पञ्चकृत्व उद्गायति । पञ्चकृत्वः प्रतिहरति । पञ्चकृत्व उपद्रवति । पञ्चकृत्वो निधनमुपयन्ति । इति तत् स्तोभसहस्रं भवति ।** (ऐ. आ. २. ३. ४) इति । अत्र पञ्चकृत्वो निधनमुपयन्तीति देवता अभिप्रेत्योच्यते । तासां चास्मिन् पक्षे निधनत्वं सूत्रान्तरमतेन द्रष्टव्यम् । अस्मिन् सूत्रमते तु **वाक् चेत् स्तोभान्त** (ला.श्रौ.सू. ७.८.५) इत्यादिलक्षणविरहान्न निधनत्वमिति समाप्ता राजनकथा । रौहिणं तु प्रवर्ग्य एव विनियुज्यते ॥ १० ॥ 5

**प्राग् देवव्रतादिलान्दं विभाग्यम् ॥ ११ ॥**

**अंधिपं । ताइ मन्युना** (आ. गा. ५. ५. २१२) इति **देवव्रतात् प्राक्** कऊ (आ. गा. ५. ५. २०६-२११) इत्यादि पञ्चानुगान**मिलान्दम्** । **अग्नेरिलान्दं पञ्चानुगानम्** (आ. ब्रा. ६. ५. १) इति श्रुतेः । तच्च **विभाग्यम्** । तस्य सर्वाण्यनुगानानि विभाग्यानीत्यर्थः ॥ ११ ॥ 10

**अविभाग्यं चेदाद्य उत्तमानां मध्यमः ॥ १२ ॥**

इलान्दम् **अविभाग्यं चेत्** मतं तदा **आद्ये** तु गाने **उत्तमानां** स्तोभानां **मध्यमः** स्तोभः प्रतिहारः ॥ १२ ॥ 15 16

---

1. AMB[1]B[2]. °स्तोमः for °स्तोभः.
2. A. om. तथा च ; O. एव for ऐतरेयक°.
4. O. तत्र for तत्.
5. AM. om. अत्र.
6. O. सूत्रान्तरे for सूत्रान्तरमतेन ; S[2]. °मतमेव for °मतेन.
7. M. स्तोभ इत्युक्त° for स्तोभान्त इत्यादि ; M. om. न.
14. T. मध्यमा, A. मध्यम्, M. मध्ये for मध्यमः ; S[1]S[2]. Combine the sutras 12 and 13.
15. B[2]A. विभाग्यं for अविभाग्यं ; MAB[1]B[2]. om. चेत् मतं ··· प्रतिहारः (L. 16) ; S[1]S[2], om. चेत् मतं ··· प्रयोगः (p. 196, L. 4).

## उत्तमे षडक्षरः स्तोभान्तः ॥ १२ ॥

**उत्तमे** अनुगाने उत्तमपादादौ **षडक्षरः स्तोभान्तः** प्रतिहारः। रयिंवर्चोद्दशे (आ.गा.५.५.२११) इति। इतराणि अनुगानानि विभाग्यान्ये-वेत्यर्थादुक्तं भवति। तृचे प्रयोगः उदाह्रियते। प्रथमस्य स्तौभिकस्यानुगानस्य प्रतिस्तोत्रीयमादावनुषङ्गः। तस्य विभाग्यत्वपक्षे **हाउहाउहाउ** इति प्रस्तावः। ऊ २ इति त्रिरभ्यस्तम् उद्गीथः। हुं ऊ २ इति त्रिरभ्यस्तं प्रतिहारः। **इयाहाउ** इति त्रिरभ्यस्तमुपद्रवः। **इट् इडेति** निधनम्। अविभाग्यत्वपक्षे **हाउहाउहाउ**। ऊ ऽ २ (त्रिः) इति प्रस्तावः। **इलान्दाद्ये त्रिरुक्तम्** (पु. सू. १०. ११. १७) इति वचनात्। **इयाहाउ** इति मध्यमोऽभ्यासः प्रतिहारः ॥

द्वितीयमनुगानं सस्तोभविभाग्यम् **हाउहाउहाउवा** इति प्रस्तावः। **अग्ने तव श्र। इडा। सुवः। इडा** इति निधनानि। एवमुत्तरास्वपि विधासु भक्तयः ॥

तृतीयमनुगानं सस्तोभपदविभाग्यम्। **हाउहाउहाउ बृहद्भानोशा-हाउवा** इति प्रस्तावः। **सूवाः।** **इह** इति निधने। **हा उवा** इति च प्रस्तावः। **ज्योतिरिति** निधनम्। एवमुत्तरासु विधासूद्गीथादयो द्रष्टव्याः ॥

---

1. S¹TB¹ उत्तमेषु for उत्तमे

2. MAB¹B². om. उत्तमे ... तृचे प्रयोगः (L. 4.)

4. M. यद्याश्रीयते, AB¹B²S¹S². यद्याद्रियते for उदाह्रियते.

5. MB¹B²AO. विभाग्यपक्षे for विभाग्यत्वपक्षे.

7. MAB¹B²S¹S². trans. अविभाग्यत्वपक्षे ... प्रतिहारः (L. 9) after इडेति निधनम् (P. 197. L. 6); MAB¹B²S¹S². after °पक्षे, add: प्रथमेऽनुगाने.

8. M.B¹B²O. त्रिरुक्ताभ्याम् for त्रिरुक्तम्.

9. M.B¹B²A. मध्यमेन for मध्यमोऽभ्यासः.

14. B². om. उवा इति ... स्तोभोपक्रमः (P. 197, L. 1).

15. O. om. विधासु.

चतुर्थमप्यनुगानं सस्तोभपदविभाग्यम्। इया २ इत्यादिस्तोभोपक्रमः। **पावकवर्चा** इति साभ्यासः प्रस्तावः। एवमितरा अपि भक्तयः। **ए। व्रतमेसुवरे शकुना** इति निधनम् ॥

पञ्चमस्यानुगानस्य विभाग्यत्वपक्षे **पुत्रा औहोहोहाइ। माताऽ १ राऽ २ः** इति प्रस्तावः। ततः पर्वद्वयमुद्गीथः। ततः पर्वद्वयं प्रतिहारः। **रोदासौहो** इत्यादिरुपद्रवः। इडेति निधनम्। अविभाग्यत्वपक्षे पञ्चमेऽनुगाने **पुत्रा औहोहोहाइ** इति त्र्यक्षरः प्रस्तावः। **रोदासौहोऽ २** इति प्रतिहारः ॥ 5

ननु अविभाग्यत्वपक्षे **षडक्षरः स्तोभान्त** इत्युक्तम्। सत्यम्। योन्यभिप्रायं तत्। इह तु त्र्यक्षर एव प्रतिहारः। विच्छन्दस्स्वक्षरवृद्धिर्लोपश्च। तत्र गीतेन प्रतिहारं विन्द्यात् इत्युक्तत्वात्। **प्रातिहारिकमेव गीतम्। प्रतिहारो वैच्छन्दसेष्वप्यपदादौ** (ला.श्रौ.सू.७.७.३३) इति सूत्रवचनात् च। अत्र सूत्रकारेण उत्तमस्यानुगानस्याविभाग्यत्वपक्ष एवोक्तः। **इलान्दस्योत्तमेऽनुगाने षड्। विभाग्यानीतराणि। प्रथमं वा विभाग्यम्। तत्रोत्तमस्य स्तोभस्य मध्यमेन वचनेन** (ला.श्रौ.सू.७.७.१२-१५) इति। एवमुत्तरयोः स्तोत्रीययोः ॥ १३ ॥ 10 15

---

2. O. इतरासु, S[2]. उत्तराः for इतराः.

3. वृत° for व्रत° ; A. शकुनक for शकुना.

4. M. after °गानस्य, adds : अपि.

5. M.B[1]. om. ततः ; O. before प्रतिहारः, adds : प्रस्तावः लोक सामभिगमृरिति.

6. M.B[1]B[2]A. trans. अविभाग्यत्वपक्षे ... प्रतिहारः (P. 196. L. 7-9) after निधनम्। ; MB[1]B[2]AS[1]S[2]. om. अविभाग्यत्वपक्षे.

11. O. om. अपि ; O. om. च.

12. M. om. अत्र ; B[1]B[2]. प्रकारेण for °कारेण ; MB[1]B[2]S[1]S[2]. उक्तमस्य for उत्तमस्य. The Ms. B[1]. (No. 6739, Baroda) ends with सूत्रप्रकारेणोक्त—.

15. O. द्वितीयतृतीययोः for स्तोत्रीययोः.

## ऋतुष्ठायज्ञायज्ञीयम् ॥ १४ ॥

वा५ सन्तः । ई३ न्न३ रन्तायाः (आ. गा. ५. ५. २१५)
इत्येतत् ऋतुष्ठायज्ञायज्ञीयम् । ऋतुलिङ्गात् । तस्य ऋषिः प्रजापतिः ।
अग्निचित्यायां विनियोगः ॥ १४ ॥

## षष्ठ्यां षष्ठं पुरुषव्रतम् ॥ १५ ॥

5

षष्ठ्यां दशतिषष्ठं साम पुरुषव्रतम् । कास्मीन् कयान (आ.गा.५.
२२४) इति । तस्य पुरुषः ऋषिः । अग्निचित्यायामेव विनियोगः ॥ १५ ॥

## लोकसामानि ॥ १६ ॥

हवाइमन्ये (आ. गा. ५. ६. २२५) वाक्कयानः (आ. गा. ५. ६.
10 २२६) प्रतिष्ठासि (आ. गा. ५. ६. २२७) इति त्रीणि लोकसामानि ।
लोकानां त्रीणि व्रतानि दिवोऽन्तरिक्षस्य पृथिव्याः (आ. ब्रा. ६. ३. ६.
२. ३) इति । अथापरम् । द्यावपृथिव्योर्विपरीते ॥ (आ.ब्रा.६.३.६.४)
इति श्रुतेः । एषामपि तत्रैव विनियोगः ॥ १६ ॥

## ऋश्यस्य साम ॥ १७ ॥

15 हरीतइन्द्रश्मश्रुणी (आ. गा. ५. ६. २२८) इत्येतत् ऋश्यस्य
साम । महाव्रते ब्राह्मणम्—ऋश्यस्य साम्ना गार्हपत्यमुपतिष्ठन्ते । (तां.ब्रा.
५.४.१३) इति । ऋश्यस्तस्य ऋषिः । ऋश्यास इन्द्र शुङ् इत्यादि निधनम् ।
अत्र सूत्रम्—इन्द्रप्रभृति प्रत्यक्षं निधनमुपेयुः (ला.श्रौ.सू.३.९.२२) इति ।
19 इन्द्रतमरपूतेति संबुध्यन्तं ब्रूयुरित्यर्थः । निदानकारस्त्वाह—ह्रस्वं प्रत्यक्षं

---

3. O. कृत° for ऋतु°.

17. AB[1]B[2]. ऋषिस्तस्य ऋश्यः for ऋश्यस्तस्य ऋषिः.

19. O. अक्षरं for आह.

द्रावितं परोक्षमपि वेन्द्रेति प्रत्यक्षमिन्द्रेति परोक्षमिति ह्रस्वम् (नि. सू. ६. ७. १८) इति। पूता इत्येवमित्यर्थः ॥ १७ ॥

प्राजापतेर्हृदयम् ॥ १८ ॥

इति श्रीकात्यायनविरचिते प्रतिहारसूत्रे त्रयोदशः खण्डः ॥ १३ ॥

केमाः (आ.गा.५.८.२४३) इत्येतत् प्रजापतेर्हृदयम्। लिङ्गात्। 5
अस्य अग्निचित्यायां परिमात्सु च विनियोगः। ए[२र]। हृ[१]द[२]यम् इति द्विरुक्तं निधनम्। प्रजारूपमित्यादि च ॥ १८ ॥

इति श्रीवामनार्यसुत-वरदराजविरचितायां दशतयीवृत्तौ
प्रतिहारसूत्रव्याख्यायां त्रयोदशः खण्डः ॥ १३ ॥

आरण्यके तृतीयं पर्व समाप्तम् 10

---

2. M. पूगा for पूता ; O. इत्येवमर्थः for इत्येवमित्यर्थः.

6. O. om. अस्य.

# चतुर्दशः खण्डः

## आरण्यके चतुर्थं पर्व

### शुक्रियाद्यमग्नेर्व्रतम् ॥ १ ॥

शुक्रियाणां साम्नामाद्यं कऽभ्राजाग्निर्मूर्धा (आ. गा. ६. १. २५१) इति
5 अग्नेर्व्रतं सस्तोभपदविभाग्यम् । ए । विश्वस्येत्यादि निधनम् ॥ १ ॥

### भ्राजाभ्राजे विकर्णभासे महादिवाकीर्त्यं पञ्च ॥ २ ॥

तैत्तरीयके सांवत्सरिकं विषुवन्तमधिकृत्य तस्मादेकविंशेऽहनि पञ्च
दीवाकीर्त्यानि क्रियन्ते इति यान्युच्यन्ते तान्येतानि भ्राजादीनि पञ्चेत्यर्थः ।
अस्मद्ब्राह्मणमपि **महादिवाकीर्त्यं साम भवति** (तां. ब्रा. ४. ६. १२)
10 इत्युपक्रम्य **रश्मयो वा एत आदित्यस्य यद्दिवाकीर्त्यानि** (तां. ब्रा. ४. ६.
१३) इत्युक्त्वा एतान्येव **पञ्च** सामानि इति विदधाति । तत्र **भ्राजा अग्न
आयूंषि** (आ. गा. ६. १. २५५) इति **भ्राजम्** । **आभ्राजाग्निर्मूर्धा** (आ. गा.
६.१.२५६) इति **आभ्राजम्** । निधनलिङ्गात् । श्रुतिश्च भवति । **सूर्यस्य
भ्राजाभ्राजे द्वे** (आ. ब्रा. ६. ४. १. ४) इति । तयोः **भ्राजं** स्तोभविभाग्यम् ।
15 र ए । १र भ्राज २ इति निधनम् । **आभ्राजं** सस्तोभपदविभाग्यम् । ए । १र र २ आभ्राज
इति त्रिरुक्तं निधनम् । हाहाउ । **विभ्राड्** (आ. गा. ६. १. २५७) इति
**विकर्णम्** । **कोहाप्रक्षस्य** (आ.गा.६.१.२५८) इति **भासम्** । **वायोर्विकर्ण-
18 भासे द्वे** । **मृत्योर्वा** ॥ (आ.ब्रा.६.४.१.५) इति । ते च सस्तोभपदविभाग्ये ।

---

7. M. om. सांवत्सरिकं ; O. सांवत्सरीयकं for सांवत्सरिकं.

11. M. उक्तानि, A. उक्ता for उक्त्वा ; AB[2]. trans. इति after एतानि.

18. M. स्तोभविभाग्ये for सस्तोभपदविभाग्ये.

तत्र विकर्णस्य फा २ ट्। फा २ ट्। भ्रा २ ट् इति त्रीणि निधनानि। भासस्य इहौहो। भद्रम् इत्यादीनि दश निधनानि। ए २३। हियाहाउवा ३ इत्ययमुपद्रवशेषः। भासनिधने दशमस्य पादस्य उपायमुद्गातैव ब्रूयात् (ला.श्रौ.सू.७.६.१९) इति सूत्रवचनात्। भासानन्तरं महादिवाकीर्त्यम्। तस्य कायुर्-एवाहि-वयोमनो-वयोमनाः-ऊर्क-धर्मविधर्म-औहौहोवाहोइ विभ्राट्-भूमिर्-द्यौः-क ज्योतिर् (आ. गा. ६. १. २५९-२६८) इति दशानुगानानि। तथा चार्षेयब्राह्मणम्-ऐन्द्रं महादिवाकीर्त्यम्। सौर्यं वा दशानुगानम्॥ (आ.ब्रा.६.४.१.६) इति॥ २॥ 5

## तस्यात्मा स्तोभविभाग्यः ॥ ३ ॥

तस्य महादिवाकीर्त्यस्य आत्मा सप्तममनुगानम्। तथा च श्रुतिः-तस्य शिरश्च ग्रीवा च स्कन्धकीकसौ च पुरीषाणि च पक्षौ चात्मा चोरू च पुच्छं चैतत् साम सुपर्णमित्याचक्षते॥ (आ.ब्रा.६.४.१.६) इति॥ ३॥ 10

## द्विप्रस्तावं चैतस्मात् ॥ ४ ॥

एतस्मात् कारणात् आत्मनः स्तोभविभाग्यत्वात् द्विप्रस्तावं च महादिवाकीर्त्यं भवति। आत्मन्येकः प्रस्तावः। प्रथमानुगाने चैक इति। सूत्रकारश्चाह-तस्यात्मा स्तोभविभाग्यः। प्रथमायैवानुगानाय प्रस्तोता प्रस्तुयादात्मने च। इतराण्यनुगानानि उद्गातैव सर्वाणि ब्रूयात्। तेषां निधनेष्वेनमितरावनूपेयाताम् (ला. श्रौ. सू. ७. ६. १२-१५) इति॥ ४॥ 15 19

---

1. AB². विकर्णे for विकर्णस्य.
2. M. om. दश.
5. A. om. तस्य ... महादिवाकीर्त्यम् (L. 8).
9. AB²M. om. आत्मा.
16. AB². स्तोता for प्रस्तोता.
17. S¹S². प्रसुयात् for प्रस्तुयात्.
18. AB². निधने शेषौ for निधनेष्वेनमितरौ; OS¹S². om. इतरौ; O. अनपेयानाम् for अनूपेयेताम्.

## तस्याद्ये देवते विपरिहरेत् आद्यन्तसमाधये ॥ ५ ॥

**तस्य** महादिवाकीर्त्यस्य **आद्ये देवते** आयुर्ज्योतिरित्येते **विपरिहरेत्** । विपर्यस्येत् । किमर्थम्? **आद्यन्तसमाधये** । पूर्वमेव ज्योतिरवसानं महादिवाकीर्त्यम् । एवं कृते ज्योतिरुपक्रमं च भवतीति आद्यन्तयोः समाधिः साम्यं तस्य
5 सिद्ध्यतीत्यर्थः ॥ ५ ॥

## प्राङ्निधनेभ्यश्चतुष्पर्यायः स्तोभादिः ॥ ६ ॥

अत्र सर्वाणि शुक्रियाणि अनुवर्तन्ते । शुक्रियेषु **प्राङ्निधनेभ्यो** यः **स्तोभादिः**,-आदिशब्देन देवतापदं गृह्यते,-स **चतुष्पर्यायो** भवति । चत्वारः पर्यायाः यस्य स तथोक्तः । चतुरावर्तनीय इत्यर्थः । अत्र सूत्रम्—**त्रिरुक्तान्**
10 **स्तोभान् शुक्रियेषु चतुर्ब्रूयुरन्यत्र निधनेभ्यः** (ला. श्रौ. सू. ७. ६. १०) इति । महादिवाकीर्त्यस्यैवं प्रयोगः । **हाउहाउहाउ आयुरित्यारभ्य ज्योतिः औहोवेत्येतदन्तं** प्रस्तोता ब्रूयात् । **कावश्रौतकक्ष-** (पु. सू. १०. १०. १३) इत्यादिवचनात् । **ए वाज्योतिरिति** सर्वे । द्वितीयादीनि पञ्चानुगानानि उद्गातैव ब्रूयात् । तेष्वपि निधनं सर्वे । तत्र द्वितीयस्य **हियेवा** (२ र १) इत्यादिनिधनानि ।
15 **ई २३४५** (१ १ १ १) इति तृतीयस्य । **ऊ २३४५** (३ १ १ १ १) चतुर्थस्य । **धर्म** इति पञ्चमस्य । **हु५ वं वम्** इत्यादि षष्ठस्य । पञ्चमषष्ठयोर्निधने इति केचित् । तत्र हेतुर्मृग्यः । अथात्मनः **औहौहोवा होइ** (२ र र १ र र) इत्यादिकं वान्तं स्तोभं प्रस्तोता ब्रूयात् । स्तोभविभाग्यत्वात् । वान्त इत्यधिकृत्य आत्मनि च महादिवाकीर्त्ये इति
19 वचनाच्च । **भू २३४ वात्** इति देवतापदं **विभ्राड् बृहत् पिबतु सोम्यं मध्विति**

---

1. M. दैवते for देवते.
3. M. आद्यं तत् समाधयेत् for आद्यन्तसमाधये.
4. MAB². क्रमः °क्रमं for.
7. तत्र for अत्र and om. सर्वाणि.
12. MB². एवम् for एतत् ; A. om. एतत्.
16. M. हिंव for हु५ वं.

पादं च सर्वे। अथ तमेव स्तोभम् उद्गाता। जा २३४ नात् इति सर्वे। आयुर्दधदिति पादं च। अथ तमेव स्तोभं प्रतिहर्ता। वा २३४ द्वात् इति सर्वे। वातजूत इति पादं च। पुनस्तमेव स्तोभमुद्गाता। का २३४ रात् इति देवतां प्रजाः पिपर्तीति पादं च सर्वे। पुनस्तमेव स्तोभमुद्गाता। तत्र वाशब्दं तृतीयान्तं कुर्वेत्। ए। अभ्राजीज्ज्योतिरभ्राजीत् इति सर्वे। अथ भूमिरित्यादीनि त्रीण्युद्गातैव। तत्र भूमिरित्यस्यानुगानस्य ए ३। भूता या २३४५ इति निधनम्। द्यौरित्यस्य ए ३। आयुषे २३४५ इति। कज्योतिरित्यस्य ई २३४५ निधनम्। महादिवाकीर्त्यस्य प्रयोगे प्रकारान्तराणि अपि सूत्रे कथितानि। तानि विस्तरभयादत्र न लिख्यन्ते॥ ६॥

## प्राक् परिधिभ्यो घर्मरोचनम्॥ ७॥

कभ्राजा उदुत्यम् (आ. गा. ६. २. २८०-२८५) इत्यादयस्तृचे गीयमानाः षट् परिधयः। तेभ्यः प्राक् उद्यँल्लोकानरोचयः (आ. गा. ६. २. २७९) इति घर्मरोचनम्। तस्य घर्म ऋषिः॥ ७॥

## इन्द्रस्योत्तरं सार्पराज्ञम्॥ ८॥

परिधिभ्य इत्यनुवर्तते। रोचनमिति च। परिधिभ्यः उत्तरं सार्पराज्ञम्। अन्तश्चरति रोचनेत्यस्यामृचि यत् साम तदिन्द्रस्य रोचनम्। ननु परिधिभ्य उत्तरं सार्पराज्ञमिति विशेषणद्वयं न संगच्छते। द्वे ह्येते सामनी वाक्यन

2. $S^1S^2$. om. अथ.
4. सर्वे for देवतां.
6. $AB^2OS^1S^2$. अनुगानानि for आदीनि ; $ABS^1S^2$. om. अस्य.
11. $A.B^2M$. शुक्र for भ्राजा.
14. $S^1S^2OA$. °सार्पराज्ञाम्, T. सार्पराज्ञयाम् for सार्पराज्ञम्.
16. O. om. परिधिभ्यः ... न तत्. (p. 204, L. 2).
17. $AB^2$. अन्ये for ह्येते.

(आ.गा.६.३.२८६) इत्यादिकम्। **अन्तर्देवेषु** (आ.गा.६.३.२८७) इत्यादिकं च। ततश्च यत् परिधिभ्य उत्तरं न तत् सार्पराज्ञम्। यच्च सार्पराज्ञं न तत् परिधिभ्य उत्तरम्। अत्रोच्यते। आर्षेयब्राह्मणे **सन्त्वा भूतान्यैरयन्** (आ.गा. ६. २. २६९) इत्यादीनि **उन्नयाम्** (आ. गा. ६. ३. २९०) इत्यन्तानि
5 सामानि एकविंशतिर्द्वाविंशतिर्वेति पक्षद्वयमुक्तम्। **आदित्यव्रतमेकविंशत्यनुगानम्। [इति] शाण्डिलीपुत्रः। द्वाविंशतिरिति वार्ष्यायणीपुत्रः** (आ. ब्रा. ६. ४. २. १) इति। तत्र केचित् प्रतिपद्यन्ते द्वाविंशतिपक्षे **सन्त्वाभूतानी**-त्यादि **सन्त्वाभूतान्यैरयन्।** (२ २र १र२ १) **होइ** (आ. गा. ६. १. २६९) इत्येवमन्तमेकं साम। उवीत्यादि **देवादिवाज्योति**रित्येवमन्तं चापरम्। श्रूयते हि—
10 **भूतवदित्येकम्॥ चित्रं देवानाम्** (सा. ६२९) **अन्तर्** (सा. ३१६) **इति द्वयोरपरम्॥** (आ. ब्रा. ६. ४. २-३) इति। एकविंशतिपक्षे तु तयोरेकसामत्वमर्थसिद्धमिति॥

तदयुक्तम्। न ह्यत्र पक्षविशेषः श्रूयते। तस्मात् **सन्त्वाभूतानी**-त्यादावृगभावात्तस्य परेण सहैकसामत्वं शङ्क्येतेति तन्निवृत्त्यर्थेयं विभागश्रुतिः।
15 पक्षद्वयनिर्वाहस्तु परस्तादेव स्पष्टं श्रूयते। **ऋतूनां वागादिपित्र्यम्॥ अन्त्यं वैकल्पिकम्॥ तन्मित्रावरुणयोश्चक्षुरित्याचक्षते॥** (आ. ब्रा. ६.४. २. ९-११) इति। अयमर्थः—वाङ्मनः इत्यादिकमायुःपित्र्यमेवमन्तं वैकल्पिकम्। द्वाविंशतिपक्षे पृथग्भूतम् ऋतूनां साम पक्षान्तरेषु अन्तर्देवेष्वित्यादिना सहैकम्।
19 तच्च मित्रावरुणयोश्चक्षुरित्युच्यते इति। तत्र **वागित्यादि देवादिज्योति**रित्यन्तं

---

2. AB². om. न ; AB². सार्पराज्ञादनन्तरं for सार्पराज्ञं.
7. AB²M. om. तत्र ; O. परि° for प्रति°.
9. AB²M. om. श्रूयते हि.
10. AB². भूतवदित्यन्तम् for भूतवदित्येकम्.
16. O. om. आचक्षते ... चक्षुरिति (p. 205 L. 4).
18. M. अपृथग्भूतं for पृथग्भूतं ; A. om. अन्तर्देवेषु.
19. M. om. च ; M. before अन्तं, adds :—एवम्.

साम। तदा संगच्छत एव विशेषणद्वयम्। न चैवमन्यतरविशेषणमनर्थकमिति वाच्यम्। द्वाविंशतिपक्षाश्रयेण अन्यतरस्य इन्द्ररोचनत्वं मा भूदित्येवमर्थत्वात् विशेषणद्वयस्य। इन्द्ररोचनत्वं च अस्य शाखान्तरमूलम्। आर्षेयब्राह्मणे तन्मित्रावरुणयोश्चक्षुरित्युक्तम्। अत्र सूत्रम्—रुचितं प्राहुस्तत् घर्मस्य रोचनम्। इन्द्रस्य वा (द्रा. श्रौ. सू. २. २. २८) इति। यदा रुचितं घर्मं प्राहुस्तदा घर्मरोचनमिन्द्ररोचनं वा गायेदित्यर्थः ॥ ८ ॥ 5

## महानाम्न्यः सिमाः शक्वर्यः ॥ ९ ॥

विदा मघवन् (सा. ६४१) इत्यस्मिंस्तृचे गीयमानमेकमेव साम बहुवचनान्तैर्नामभिरुच्यते। आपो धारा इतिवत्। तथा च श्रुतिः—ऐन्द्यो महानाम्न्यः। प्रजापतेर्वा। विष्णोर्वा। विश्वामित्रस्य वा। सिमा वा। मण्ड्या वा। अध्वरमा वा। शक्र्यो वा॥ (आ. ब्रा. ६. ४. २. १५) इति। आसां त्रिभिरपि नामभिर्व्यवहारदर्शनात् त्रयाणामुपादानम्। तद्यथा—तस्य महानाम्न्यः पृष्ठं भवन्ति। (तां.ब्रा. २१. ४. ८) समानं वै सिमानां च रूपम्। रेवतीनां च। (तां. ब्रा. १३. ९. ४) शक्करीषु षोडशिना स्तुवीत॥ (तां.ब्रा.१२.१३.१३) इत्यादिवचनात्॥ ९॥ 10 15

## द्विःप्रस्तावाः॥ १० ॥

महादिवाकीर्त्यवदासां द्विःप्रस्तावत्वे युक्तिर्नास्ति। अपि त्वाचार्याणां वचनमेवेत्यर्थः ॥ १० ॥

तावेव प्रस्तावौ दर्शयति— 19

---

1. AB². after विशेषणद्वयम् ।, add :—न चैवमन्यतरविशेषणद्वयम्.
2. A. इन्द्रस्य for इन्द्र°.
3. AM. इन्द्रस्य for इन्द्र°.
7. M. before महानाम्न्यः adds : ऐन्द्र्यः.
8. O. om. विदा.
11. B². मध्याः, M. मडस्याः for मण्ड्याः.
13. B¹⁻²O. पृष्ठाः for पृष्ठं.

## द्विपदायाः प्रस्तुत्य शक्वर्याः प्रस्तौति ॥ ११ ॥

अत्र निदानम् —अथैतासु महानाम्नीष्वपि प्रतिपादयन्तीदं शाक्करमिदम शाक्करम् इति । अशाक्वरी प्रथमा द्विपदा । शाक्वराणि त्रीणि पराणि पदानि । धातुरशाक्वरः पञ्चाक्षरः । स एष कृताकृतो
5 भवति । वत्सोऽशाक्वरः अष्टाक्षरः । ऊधः शाक्वरमष्टाक्षरम् । अभ्यासवत्तस्य व्यक्षरान् पदादीन् प्रतीतोदा इत्याचक्षते । पुरुषोऽशाक्वरः पञ्चाक्षरः शाक्वरस्यैव त्रीणि पराणि पदानि । अध्यासोऽशाक्वरोऽष्टाक्षरः । तस्य प्रस्तावयति निधनं न प्रतिहारयति । एतेनैवोत्तरयोः शाक्वराणि चाशाक्वराणि च व्याख्यातानि । व्यध्यासोत्तमा शाक्करी
10 भवति (नि.सू.३.१३.१-१२) इति । तत्र द्विपदायां शक्वरप्रथमे च प्रस्तावः कार्य इत्यर्थः ॥ ११ ॥

## ऊधसोऽतीषङ्गवत् ॥ १२ ॥

तासां योऽष्टमः पाद ऊधस्संज्ञकः तस्यातीषङ्गवत् प्रतिहाराः । आन्धांतास्त्रय इत्यर्थः ॥ १२ ॥

15 ## ऊर्ध्वं पुरुषात् षडक्षरं चैके स्तोभान्तम् ॥ १३ ॥

पुरुषसंज्ञकात् पञ्चाक्षरात् ऊर्ध्वं षडक्षरं यत् स्तोभान्तं शाक्वरोत्तमपादाद्यं
17 तच्चैके प्रतिहारमाहुः पूर्वोक्तांश्चेति ॥ १३ ॥

---

2. O. तथा for अथ; O. after एतासु adds: द्विपदासु, and om. अपि.
4. M. शाक्वरः for अशाक्वरः.
5. O. om. अष्टाक्षरः ... प्रतिहारयति । (L 8).
6. S[1]S[2]. पादादीन् for पदादीन्.
7. M. अभ्यासः for अध्यासः.
8. AB[2]. om. निधनं; O. अनेन for एतेन.
9. AB[2]. om. आशाक्वराणि च; M. द्वचभ्यास° for द्वयध्यास°.
13. M. °षङ्गप्रतिहारवत् for °तीषङ्गवत्.
16. A. om. पञ्चाक्षरात्.
17. O. चैके for चेति.

प्रस्तावं चाध्यासपुरीषपदेषु च ॥ १४ ॥

चकारादेके आहुरित्यनुकृष्यते। तथा च सूत्रकारः—**महानाम्नीषु द्विपदासु प्रस्तावाः शाक्करप्रथमेषु अध्यासपुरीषेषु पदेषु च ॥ (            ) इति।** तत्र **पद्योऽनादेशे** (पु. सू. १०. १०. ८) इत्याद्युक्तैः प्रकारैः प्रस्तावः कार्यः इत्यर्थः। तदुक्तं फुल्ले—**महानाम्नीषु द्विपदासु प्रस्तावः शाक्वरप्रथमेष्वध्यासपुरीषपदेषु च यथोपदिष्टम्** ॥ (पु.सू. १०. ११. २०) इति ॥ १४ ॥ 5

पुरीषपदशेषान्निधनान्याचार्याः
स्वरितान्तानि यथाधीतं वा ॥ १५ ॥

ऊर्ध्वं शाक्वरीभ्यः **पञ्च पुरीषपदानि पुरीषपञ्चाक्षराणि** (नि. सू. ४. १. १९) इति निदानम्। तेषां ये शेषा **होइहोइ** इत्यादयस्ते निधनानीत्याचार्याः। तानि च **स्वरितान्तानि** स्युः। **यथाधीतं** वेति विकल्पः। स्वरितशब्देनास्य मन्द्रस्वर उच्यते ॥ १५ ॥ 10

तेषु पाञ्चविध्यं चेद्धोइकाराद्वागन्तो वागन्तः ॥ १६ ॥

**इति श्रीकात्यायनविरचिते प्रतिहारसूत्रे चतुर्दशः खण्डः ॥ १४ ॥** 15

---

3. MB²A. °पुरीष° for पुरीषेषु.

8. O. पुरीषेषु पदेषु शेषाणि for पुरीषपदशेषान्निधनान्याचार्याः

9. O. om. स्वरितान्तानि ... इत्याचार्याः. (L. 12)

12. O. om. तानि च.

13. O. कल्पः for विकल्पः.

14. A. अन्तेषु for तेषु.

तेषु पुरीषपदेषु पञ्चभक्तित्वं चेदिष्टं तदा **होइकारात्** परो वाशब्दान्तो
द्व्यक्षरः प्रतिहार इति। अत्र शाक्वरीणां शाक्वराशाक्वरपादा भक्तयश्चोदाह्रियन्ते।
**विदामघवन्नि**त्यादिका दिशा इत्येवमन्ता द्विपदा। तस्यामादितः सप्ताक्षरः पादः
स्तोभादिः प्रस्तावः। **पद्योऽनादेशे** (पु. सू. १०. १०. ८) इति वचनात्।
5 **स्तोभः पुरस्तादन्तर्वा प्रस्तोतुः** (पु. सू. १०. १०. २) इति वचनाच्च।
**शिक्षाशचीनां पतयः** इत्यादयः त्रयः पादाः शाक्वराः। तेषामाद्यः सप्ताक्षरः
एकारादिः प्रस्तावः। **सुवर्णाꣳशुरिति** विकर्षेण पञ्चाक्षरो धातुसंज्ञः पादोऽशाक्वरः।
तस्य कृताकृतत्वमस्माभिरध्ययनात् बह्वृचैरनध्ययनाच्च। **प्रचेतनप्रचेतये**ति
वत्सोऽशाक्वरोऽष्टाक्षरः। **इन्द्रद्युम्नाय न इषे** इति ऊधश्शाक्वरमष्टाक्षरम्।
10 तच्च त्रिरभ्यस्यते। तत्र प्रत्यभ्यास**मिन्द्रे**त्याद्यः स्वरो द्व्यक्षरः प्रतिहारः। इडाथकारौ
प्रथमस्वरस्थानमारभ्य मन्द्रान्तं कर्षणीयौ। **अन्ततो निधनसामान्यादन्तः-
सामिकानि निधनानि संप्रसारयन्ति** (सं. उ. ब्रा. ३. १) इति श्रुतेः।
**एवाहिशक्र** इति पुरुषोऽशाक्वरः पञ्चाक्षरः। **रायोवाजाये**त्यादयस्त्रयोऽष्टाक्षराः
पादाः शाक्वराः। तत्र **मंहिष्ठ वज्रिन्नाहो** इति प्रतिहारः। **ईडा इडा अथा
15 इट् इडे**ति निधनानि। **आयाहि पिबमत्स्वे**त्यध्यसोऽशाक्वरः। तस्मिन्
**आया** इति द्व्यक्षरः प्रस्तावः। जारास्वरत्वात्। प्रतिहारो नास्ति। इडेति निधनम्।
17 द्वितीयायास्तु **ए[1] २। विदा[1]रा[2]ये[2] सु[2]वीरयाम्[2]। ए[1] २। मꣳहि[2]ष्ठवज्रिन्नृ[1]ञ्जसाइ**

---

2. M. तत्र for अत्र ; M. शाक्वरीणां शाक्वराक्षर पदविवेकः for शाक्वरा-शाक्वरपादाः

3. B²A. इत्यादिषु for इत्यादिकाः ; M. पदः for पादः.

5. B². स्तोभान्तः for स्तोभः ; AB². om. च.

6. B²A. सप्त एकाक्षरः for सप्ताक्षर एकारादिः.

7. O. om. पञ्चाक्षरः.

9. M. ऊधश्शाक्वर अष्टाक्षरः for ऊधश्शाक्वरमष्टाक्षरम्.

10. O. आद्यस्वरात् for आद्यः स्वरः.

11. O. स्वरम् for स्वरस्थानम्.

14. M. शाक्वराणि त्रीणि for शाक्वराः ; O. om. पादाः ; M. इट् इडा अथा इडा इति निधनम् for ईडा इडा अथा इट् इडेति निधनानि ; O. om. ईडा.

15. MO. om. अशाक्वरः.

इति प्रस्तावौ । इन्द्रो इति प्रत्यभ्यासं प्रतिहारः । सनःस्वर्षदता २३ होइ इति च । अध्यासस्य क्रातुः इति प्रस्तावः । तृतीयायास्तु ए २ । इन्द्रन्धनस्य- सातयाइ । ए २ । सनःस्वर्षदति द्विषाः इति प्रस्तावौ । पूर्त्तीः इति प्रत्यभ्यासं प्रतिहारः । समर्येषुब्रवा २३ होइ इति च । शूरो इति प्रथमाध्यासस्य प्रस्तावः । इडेति मन्द्रान्तं कर्षेयुः । साखा इति द्वितीयाध्यासस्य प्रस्तावः । अन्यत् सर्वं पूर्ववत् ॥ 5

पुरीषपदानाम् आ इवा इति प्रस्तावः । जारास्वरत्वात् । होवा इति प्रतिहारः । इडेति निधनानि । अथवा होइ इत्यादीनि निधनानि ॥

अथ सिमानां बृहत्यनुष्टुप्सु गानविशेष ऊहाम्नायसिद्धः । तत्र शाक्वराणां पदानां स्तोभवद्यथास्थानं निवेशः । तदुक्तं सूत्रकारेण—यथास्थानं शाक्वराणि ( ) इति । तद्यथा—सोम उष्वाणस्सोतृभिरिति बृहत्याः पूर्वं विदामघवन्नित्यादिका द्विपदा प्रयोज्या । तस्याः पूर्ववत् प्रस्तावः । ए २ । सोमउष्वाणस्सोतृभाइः इति शाक्वरः प्रस्तावः । अथोद्गाता ष्णुभिराउवेत्यन्तमुक्त्वा इडाया अनन्तरं स्वर्णा॰शुरित्यादिकं प्रचेतयेत्यन्तं ब्रूयात् । आवि इत्यादिप्रतिहारः पूर्ववत् । पुनरुद्गाता नामा इत्यादिकमुक्त्वा एवाहिशक्रराये वा इत्यादि ब्रूयात् । मन्द्रया याति धाऽ २३ होइ इति प्रतिहर्ता रायाऽ ३१२ उवा इति पुनरुद्गाता । निधनानि पूर्ववत् । अनन्तरम् 10 15 17

---

4. O. om. प्रत्यभ्यासं.

5. OM. कर्षयेयुः for कर्षेयुः.

9. M. समानां बृहदनुष्टुप्सु for सिमानां बृहत्यनुष्टुप्सु ; B². अथाशाक्वराणां for तत्र शाक्वराणां.

14. M. ष्णावेत्यन्तम्, A. ष्णुभिरा वेत्यन्त O. उवेत्यन्तं for ष्णुभिरा उवेत्यन्तम्,

15. O. इत्यादिकंमूधः तत्र प्रतिहाराः for इत्यादिप्रतिहारः.

आयाहि पित्रेति अध्यास:[1] पूर्ववत् प्रयोज्यः । एवमुत्तरयोः ए २ पवस्ववाज-सातया इ इत्यनुष्टुप्सु च यथास्थानमशाक्वराणां[2] पुरीषपदानां निवेश इति सिद्धम् । द्विरुक्तिः प्रतिहार[3]प्रकरणसमाप्तिसूचनार्था ॥ १६ ॥

इति श्रीवामनार्यसुतवरदराजविरचितायां
5 दशतयीवृत्तौ प्रतिहारसूत्रव्याख्यायां चतुर्दशः खण्डः ॥ १४ ॥

॥ प्रतिहारप्रकरणं समाप्तम् ॥

॥ ॐ ॥

---

1. M. अभ्यासः for अध्यासः.
2. S[2]. शाक्वराणां for अशाक्वराणां.
3. O. om. प्रतिहार°.

# पञ्चदशः खण्डः

## निधनविकाराः

प्रतिहारोपदेशानन्तरमथ च्छन्ननिधनानि इत्यनेन खण्डेन निधनविकारा उच्यन्ते। तत्र तावत् निधनानि द्विविधानि। सामान्तिकानि अन्तःसामिकानि च [इति]। स्वरो निधनमिडा वागिति सामान्तिकानि। तदन्वयाच्च सामानि यथाक्रमं स्वाराणि निधनवन्ति ऐडानि वाङ्निधनानि चोच्यन्ते। यथा सूत्रकारः—स्वाराणि हाइकारस्वारपदानुस्वाराणि च। तेभ्योऽन्यान्यैडवाङ्निधनेभ्यश्च निधनवन्ती- (ला. श्रौ. सू. ६. ९. ६-७) ति। तत्र हाइकारस्वाराणि वामदेव्यादीनि। पदानुस्वाराणि औशनादीनि। निधनवन्ति द्विविधानि। पदनिधनानि बहिर्निधनानि च [इति]। पदनिधनानि यौधाजयादीनि। बहिर्निधनानि चामहीयवादीनि। ऐडानि काशीतबृहद्भारद्वाजादीनि। तत्र काशीतादीनां प्रतीचीनेडानामिडेति निधनम्। इतरेषां तु बृहद्भारद्वाजादीनां डेति निधनमिडेति वा। तथा च सूत्रम्—इकारादिमिडां सर्वे उपेयुः। तानि प्रतीचीनेडानि॥ डाकारं त्वन्यासु गौतमः॥ इडेति धानंजय्य (ला. श्रौ. सू. ७. ८. १६-१८) इति। वागिति वाशब्द उच्यते। तन्निधनानि यज्ञायज्ञीयादीनि॥

अथान्तस्सामिकानि निधनानि सूत्रकारेणोक्तानि। इहकार इडाथकारौ गीतं च निधनस्वरम्। हीषीस्वरं च व्यक्षरं देवताश्चारण्येगेयेषु तान्यन्तःसामिकानि निधनानि। वाक् चेत् स्तोभान्तोऽनन्तरः पुरस्ताद् वृद्धः क्रुष्टो वाकारः स्वरितं वार्चिकं वा वृद्धं पूर्वेषां

---

8. B². सप्रतिहार° for प्रतिहार°; M. छन्नानि for छन्न°.

6. O. after स्वाराणि, adds: हाइकारस्वाराणि पदानुस्वाराणि.

13. M. इकारादिति डां सरूपेयुः। तानि प्रतीचीनैडाकारं for इकारादिमिडां ... डाकारं.

14. AB². डकारं for डाकारं.

15. B². वाशब्दमते for वाशब्द उच्यते; O. तत्र वाङ्° for तन्.

18. O. after °गेयेषु, adds: इति.

20. M. क्रुष्टो for क्रुष्टो.

त्रयाणाम् यथा रेवत्यस्त्वाष्ट्रीसाम यौधाजयं दार्ढ्यच्युतमाथर्वण-मान्धीगवम् ॥ तेभ्यो यन्निगदवत्स्यनन्तरमार्चिकं तेन सहोपेयुरनादेश (ला. श्रौ. सू. ७. ८. ५-६) इति । इहकारेडाथकाराणां देवतात्वेऽप्यार्चिकं वा धृद्धं पूर्वेषां त्रयाणाम् इत्यस्य विषयप्रदर्शनार्थं पृथगुपादानम् । ग्रामेगेयार्थं
5 गीतं च निधनस्वरम् इति । सामान्त्येन निधनेन सदृशस्वरं यत् तत् साममध्येऽपि गीयते इत्यर्थः । हीषीस्वरं च द्व्यक्षरमिति । अग्न आयाहि वीतये (ग्रा. गे. १. १. १) इत्यत्र त्रिवर्गस्याद्ये साम्नि अन्तं पर्त्र हीषी । तत्सदृशस्वरं हीषीस्वरम् । देवताश्चारण्येगेयेषु इति । यानि लोकप्रसिद्धानि अनार्चिकानि पदानि यावत्सुवरित्यादीनि । वाक्यानि वयोवृद्धस्तत्यमोज
10 इत्यादीनि । तानि साक्षात् परंपरया वा देवताप्रतिपादनपरत्वात् देवताः उच्यन्ते । तान्येतानि इहकारादीनि अन्तःसामिकानि निधनानि सर्वप्रयोज्यानी-त्यर्थः ॥

किम् एतान्यविशेषणनिधनानि? नेत्याह—वाक् चेत् स्तोभान्त (ला. श्रौ. सू. ७. ८-५) इत्यादि त्रयाणाम् इत्यन्तम् । एषामिहकारादीनां पुरस्तात्
15 अनन्तरः स्तोभान्तो वाक्शब्दो यदि स्यात् । अथवा वृद्धः क्रुष्टः आकारः

---

1. AB[2]S[1]S[2]. दार्ढ for दाढर्च.

3. O. वा for अपि.

5. AB[2]. after सदृशस्वरम्, add : इति सामान्त्येन निधनेन सदृशस्वरम्. AB[2]. om. यत् तद् ; O. om. तत्.

6. O. before गीयते, adds : यत् and after गीयते, तत्.

7. AB[2]. om. अग्न.

8. O. om. हीषीस्वरम्.

9. M. अन्यान्यार्चिकानि for अनार्चिकानि ; M. om. वाक्यानि.

10. O. om. तानि ; O. देवता प्रतिपादिता परत्वादेतावदुच्यन्ते for देवता-प्रतिपादनपरत्वात् देवता उच्यन्ते.

11. The MS M concludes with उच्यन्ते. Thereafter, leaving a little space, it gives a discussion about सुब्रह्मण्या which we have transferred as Appendix at the end.

14. O. om. इत्यन्तम् ... स्वरितमिति (p. 213, L. 1).

यद्वा स्वरितमक्षरं पुरस्तात् चेत्स्यात्। अत्र स्वरितमिति द्वितीयाद्यातृतीयक्रुष्टं मन्द्रस्वरयुक्तं चोच्यते। अथवा पूर्वेषां त्रयाणाम् इहकारेडाकाराथकाराणां यदि वृद्धमृगन्तमक्षरमुक्तलक्षणं वागादिकं पुरस्तात् स्यात् तत्र एषां निधनत्वम्। नान्यथेत्यर्थः ॥

अथैषामिहकारादीनां वक्ष्यमाणनिधनसहितानि उदाहरणानि दर्शयति— 5
यथा रेवत्यः इत्यादिना आन्धीगवमित्यन्तेन। तेभ्य इत्यादि। य एते वागादयः उपायाः उक्तलक्षणाः तेभ्योऽनन्तरं यदार्चिकं निगदवर्ति निगदेन यथर्चगीत्या वर्तते तदप्यनादेशे पूर्वैः सह निधनत्वेन ग्राह्यमित्यर्थः। तत्र वृद्धार्चिकाक्षरपूर्वस्य इहकारस्य वाक्पूर्वायाश्चेडाया उदाहरणं रेवत्यः। अथकारस्य वृद्धार्चिकाक्षरपूर्वकस्य पार्थुरश्मग्रामेगेयेषु। इहकारस्य दार्ढच्युतम्। 10
स्वरितपूर्वस्य निधनस्वरस्य गीतस्य द्वित्रिणिधनायास्ये। वाक्पूर्वस्य श्येन-दाशस्पत्ये। स्वरितपूर्वस्य हीषीस्वरस्य गीतस्य वा निधनस्वरस्य यौधाजयम्। क्रुष्टाकारपूर्वस्य हीषीस्वरस्य गूर्दः। वाक्पूर्वस्य सन्तनि। देवतानां वाक्पूर्वाणां आथर्वणम्। स्वरितपूर्वाणां राजनम्। क्रुष्टाकारपूर्वस्य निगदवर्तिन आन्धीगवम्। वाक्पूर्वस्य क्षुल्लककालेयम्। स्वरितपूर्वस्य वैश्वमनसम्। अत्र च निधनत्वेन 15
पठितानि इहकारादीनि यत्र समन्वयन्ति तत्र तत्समुदायस्यैव वागाद्यानन्तर्यमपेक्ष्य निधनत्वं बोध्यम् ॥ 17

---

1. AB[2]. तृतीया for तृतीय.
2. AB[2]S[1]S[2]. before पूर्वेषां, add : अथवा वृद्धमृगक्षरं पुरस्तात् स्यात्.
3. AB[2]S[1]S[2]. om. यदि वृद्धमृगन्तमक्षरमुक्तलक्षणं.
5. O. °सहितानां for °सहितानि.
6. O. एतेन for अन्तेन.
7. A. निधनवर्ति for निगदवर्ति.
8. A. °भीत्या for गीत्या ; A. om. तत्र.
9. A. om. इहकारस्य.
11. O. °स्वरगीतस्य for °स्वरस्य गीतस्य ; O. त्रिनिध[न] त्वाष्ट्रीसामद्वि-निधनायास्ये for द्वित्रिणिधनायास्ये.
16. A. समर्पयन्ति for समन्वयन्ति ; B[2]. तत् समुद्रा यस्यैव for तत्समुदायस्यैव.

ननु द्वितीयादीनां वागाद्यानन्तर्याभावात् निधनत्वाभावः। तेन गूर्दाच्छिद्रादिषु हीषीस्वरनिगदवर्तिनोर्द्वयोरपि निधनत्वं भवति। उत्तरे गवांत्रते निगदवर्तिनः पादस्य देवतायाश्च। प्रथमे अपांव्रते देवतानाम्। ए अग्निरिशिशुक्त्व इत्यादीनां गोष्ठे। निगदवर्तिनां पदानामिड्कारस्य इडायाश्च इलान्दस्य द्वितीयेऽनुगाने। पदानामिडासुवरिडेत्येतेषां च। अस्मिश्चार्थे सूत्रवचनं लिङ्ग-भासनिधने दशमस्य पादस्योपायमुद्गातैव ब्रूयात्॥ (ला. श्रौ. सू. ७. ६. १९) इति। अत्र हि भासनिधने इत्यनेन इहोहोभद्रमित्यादीनां सर्वेषां समुदायस्य वागाद्यानन्तर्यमपेक्ष्य निधनत्वमुक्तं प्रतीयते। एवमन्तर्निधनानामन्यान्यपि बहून्युदाहरणानि। दर्शितान्येवं च तानि तत्र तत्रास्माभिः॥

अथ प्रत्युदाहरणानि दर्शयिष्यन्ते। हीषीस्वरं च त्र्यक्षरम् इत्यत्र त्र्यक्षरमिति वचनात् गौङ्गवे तृतीये पादेऽन्त्यस्य चतुरक्षरस्य निधनत्वं न भवति। देवताश्चारण्येगेयेषु इत्यत्रारण्येगेयेष्विति वचनात् ग्रामेगेयेषु देवतानां न निधनत्वम्। यथा मौक्षे इहश्रुधाइ इत्यस्या देवतायाः। तथा वागाद्युपाय-परिगणनात् संजये त्रैककुभे च हीषीस्वरस्य न निधनत्वम्। वैराजे च देवतानाम्। किं च वाक् चेत् स्तोभान्तोऽनन्तरः पुरस्तात् वृद्ध इति। अत्र वागिति वचनात् शाक्त्यसौभरादिषु हीषीस्वरस्य न निधनत्वम्। स्तोभान्त इति संभवाभिधानम्। अनन्तर इति वचनात् बृहद्भारद्वाजे प्रतिहारान्त्यं वाशब्द-मपेक्ष्य इडाया निधनत्वं न भवति। तेभ्यो तेभ्यो यन्निगदवर्त्यनन्तर-मित्यादिष्व[पि] केवलस्यानन्तर्यस्य पुरस्तादेव प्रसिद्धेः अत्र पुरस्तादित्युक्तं।

---

4. A. शिशुत्व for शिशुक्त्व.
5. $S^1S^2$. पादानाम् for पदानाम्.
7. एतेन for अनेन.
8. $S^1S^2$. om. °आदि°.
10. O. om. दर्शयिष्यन्ते.
12. $AB^1$. om. न.
14. $B^2S^1S^2$. अनिधनत्वं for न निधनत्वम्.
17. $S^1S^2$. before अनन्तर, add : न.
18. The Ms. A is incomplete and ends with : निगदवृत्त्यनन्तरम्.
19. $S^1S^2$. आनन्तस्य for आनन्तर्यस्य.

वृद्ध इति वचनात् परिध्रिषु दीर्घा[त्] वाशब्दात् परस्यादीदिहि विश्वइतस्पृथु-
रित्यस्या देवताया न निधनत्वम्। **क्रुष्टो वाकारः** इत्यत्र क्रुष्ट इति वचनात्
वरुणसाम्नि व्यक्षरोऽभ्यासादिः प्रतिहार इति पक्षे ततः पूर्वस्य **स्तोत्रं राजसु**
**गायते**त्यस्य निगदवर्तिनो न निधनत्वम्। आकार इति वचनात् प्रमंहिष्ठीये
क्रुष्टादोकारात् परस्य हीषीस्वरस्य न निधनत्वम्। श्यैते चोकारात् **आर्चिकं वा** 5
**वृद्धं पूर्वेषां त्रयाणा**मित्यत्र आर्चिकमिति वचनात् इहवद्वासिष्ठे इहकारस्य न
निधनत्वम्। **वृद्ध**मिति वचनात् ऐध्मवाहेहवद्वामदेव्ययोर्ह्रस्वदीर्घाभ्यां परस्येह-
कारस्य **पूर्वेषां त्रयाणा**मिति वचनात् अभिनिधने काण्वे हीषीस्वरस्य। फुल्लकारश्च
हीषीस्वराणामनिधनानां संग्रहश्लोकं चकार। **त्रीक्रौञ्चप्रमशाकृत्यसंजयभर-**
**क्रन्दाभिकार्णश्रवश्यैताकूपविशोविभीशककुभस्वारपर्णरश्वादिषु आयास्य** 10
**द्विनिधनकाण्वकार्तयवश्यावाश्वयश्वेषु च ज्ञेया मध्यसमन्विता न निधनं**
**हीष्येषु या सामसु** (पु. सू. १०. ३. १) इति। गायत्रीक्रौञ्चे प्रमंहिष्ठीये
शाकृत्यसंजयसौभरादिषु वायोरभिक्रन्दे अभिनिधने काण्वे कार्णश्रवसश्यैताकूपार
विशोविशीयाभीशवत्रैककुभस्वारसौपर्णतैरश्वादिषु द्विनिधनायास्ये काण्वकार्तयश-
मार्गीयवश्यावाश्वैयश्वेषु च या मध्यगता हीषी सैव तेषु सामसु न निधनमित्यर्थः। 15
**तेभ्यो यन्निगदवर्ती**त्यत्र तेभ्य इति वचनात् श्यैते **यो जरितृभ्य** इत्यस्य
हाशब्दात् परस्य न निधनत्वम्। निगदवर्तीति वचनात्। तत्रैवेन्द्रमर्चेत्यस्य।
**अनन्तर**मिति वचनात्। तत्रैव वाशब्दमपेक्ष्य **यो जरितृभ्य** इत्यस्य।
**आर्चिक**मित्यस्य व्यावर्त्यमन्वेषणीयम्। अथवा संभवप्रदर्शनार्थमेतत्। **अनादेश**
इति वचनात् उत्तरस्मिन् आष्टादंष्ट्रे **समुद्रव्यचचस**मित्यस्य न निधनत्वम्। अत्र 20
हि विभाग्येषु पदं पदं विभजन्त इत्यादेशोऽस्ति। सदोविशीये च द्वितीयतृतीययोः 21

---

1. O. दीर्घद्वादशात् for दीर्घात् वाशब्दात्; A. परस्याद्दीदिहि, O. परस्या-दीविहिविहि for परस्यादीदिहि.
5. S[1]S[2]. om. आर्चिकं वा वृद्धं पूर्वेषां त्रयाणामित्यत्र.
11. B[2]. द्विक for द्विनिधन; S[2]. याण्वादिषु यज्ञे for यश्वेषु च ज्ञेया.
13. S[1]S[2]. सौभरेषु for सौभरादिषु.
15. B[2]. हीषैव for हीषी सैव.
16. O. °र्वतिन्यामादौ for °वर्तीत्यत्र.
17. B[2]S[1]S[2]. अनिधनत्वम् for न निधनत्वम्.
21. B[2]. द्वितीययोः for तृतीययोः.

पादयोर्निधनत्वं वैषम्यप्रसङ्गान्न भवति। तयोर्हि निधनत्वे प्रस्तावप्रतिहारशेषत्वेन दृष्टस्य वान्तस्य स्तोभस्यैवोद्गीथत्वं स्यात्। न च भक्त्यन्तरशेषत्वेन दृष्टस्य वान्तस्य स्तोभस्य स्वातन्त्र्येण भक्त्यन्तरत्वमित्येतद्वैषम्यं क्वचिदपि दृष्टम्। अत एवोक्तम् ऊहलक्षणे **सदोविशीये स्तावहारोपाया वान्तास्थादौ पूर्वौ**
5 **हान्तादिति।** एतदपि। प्रत्युदाहरणानि द्रष्टव्यानि। तानि च तत्र तत्रास्माभि-र्निधनत्वेनानुपात्तत्वादेव सुबोधानीत्यवसितोऽन्तर्निधनविकारः॥

अथ निधनविकारान्वक्तुमारभते—

**अथ छन्ननिधनानि॥ १॥**

यानि स्वाध्यायकाले रूपान्तरेणाध्ययनच्छन्नानि प्रयोगकाले स्वरूपेण
10 प्रयोज्यानि निधनानि तानि वक्ष्यन्ते इत्यर्थः॥ १॥

**इडोपायास्तदाकृतिः॥ २॥**

**ऊपायाः** स्थाने **इडा** भवति। कीदृशी? **तदाकृतिः**। ऊपायाः इव
13 आकृतिर्यस्याः सा तथोक्ता। तत्सदृशस्वरेत्यर्थः। उदाहरणम् उत्सेधादिषु॥ २॥

---

1. B². om. तयोर्; O. om. हि; S¹. अपि for हि.

2. O.om. वान्तस्य; B². after स्यात्। adds: न च भक्त्यनन्तरशेषत्वेन दृष्टस्य वान्तस्य स्तोभस्योद्गीथत्वं स्यात्.

2 & 3. B². भक्त्यनन्तर° for भक्त्यन्तर°.

3. B². om. वान्तस्य; O. भक्त्यन्तरम् for भक्त्यन्तरत्वम्.

4. B². देविशीये for सदोविशीये; O. वान्त उद्गीथपादौ for स्थादौ.

5. B¹. हान्तात् for हान्तौ; B². om. तानि; B². अस्याभिनिधनत्वेन for अस्माभिर्निधनत्वेन.

6. B². om. °विकारः.

7. B²S¹. विकारं for विकारान्.

9. B². om. यानि.

12. B². उपायाः for ऊपायाः; B². after °कृतिः, adds: तस्याः and S¹S². तस्य; B²S¹S². om. इव.

13. B². after इत्यर्थः।, adds: ऊहे च तथैवाधीमहे। इन्द्रेति।

## उपोऽर्धम् ॥ ३ ॥

**उपः** अर्धोपायाः स्थाने इडाया अर्धं भवति । इडिति । अत्रापि तदाकृतिरित्येव । सूत्रकारस्त्वाह—**उबित्यर्धेडा प्रकृतिस्वरा । प्रथमस्वरा वा** (                    ) इति । उदाहरणमुद्वंशीयादिषु ॥ ३ ॥

## रहस्यवदध्यर्धा ॥ ४ ॥ 5

इडोपाया इति वचनात् अध्यर्धोपायाः स्थाने अध्यर्धेडा भवतीति सिद्धम् । सा तु **अध्यर्धेडा रहस्यवद्वेदितव्या** । रहस्येष्वज्ञोवैरूपादिषु यादृशी यत्स्वरूपा यत्स्वरा च दृष्टा इट् इडेति तादृशीत्यर्थः । उदाहरणं तु वार्शादिषु ॥ ४ ॥

## स्वर्हीष्यभिसोमान्त्या पूर्वा वा ॥ ५ ॥

**अभिसोमास आयव** (ग्रा. १५. ५. ५१८. ५) इत्येषां पञ्चमे 10 स्वःपृष्ठाख्ये साम्नि द्वे ऊपे स्तः । तयोरन्त्या **स्वर्हीषी** भवति । अन्त्यायाः स्थाने स्वरित्येतत् हीषीस्वरं भवतीत्यर्थः । पूर्वस्यास्त्विडैवेत्यर्थसिद्धम् । यद्वा पूर्वस्याः स्थाने स्वर्हीषीति अन्त्यायाः इडैवेति ॥ ५ ॥

## काशीतारूढवदाङ्गिरसदैवोदाससुज्ञानेषु ॥ ६ ॥

स्वर्हीषीत्यनुवर्तते ॥ ६ ॥ 15

## एकिनेस्वरा सुज्ञाने ॥ ७ ॥

**सुज्ञाने** ऊपायाः स्वःशब्दापत्यायाः पर्व भक्तिः सुवरिति । सा **एकिने-स्वरा** भवतीति प्रथमस्य मार्गीयवस्य यन्निधनम् एकिने इति तत्सदृशस्वरेत्यर्थः । ऊहे च तथैवाधीमहे ॥ ७ ॥ 19

---

8. OS[2]. om. तु ; OS[1]S[2]. before वार्शादिषु ins. वाभ्र°.

11. OS[1-2]. उपे for ऊपे.

12. O. एतावद्धिषी for एतत् हीषीस्वरं.

13. S[2]. after अन्त्यायाः adds : ऊपायाः ; S[2]. इव for एव.

17. O. उपायाः for ऊपायाः.

मान इन्द्रेति यथाभिहतस्तनेत् गुरुं वा भारमभिनिधाय ॥ ८ ॥

**मान इन्द्र परा वृणक्** (ग्रा. ७. ६. २६०. १-२) इत्यनयोराद्ये साम्नि ऊपास्थाने तथा निधनं कार्यं **यथा** मुद्गरादिना**भिहतः** कश्चित् **स्तनेत्** अव्यक्तं शब्दविशेषं कुर्यात्। यथा वा दुर्भरं **भारं** शिरसि **निधाय** तदाक्रान्त्या स्तनेत् तथेति। अयज्ञसंयुक्तानां साम्नाम् अस्मिन् प्रकरणे निधनविकारोपदेशाः सामविधानब्राह्मणयुक्तकाम्यादिप्रयोगाभिप्रायाः ॥ ८ ॥

अभित्वा पूर्वेति वषट्कारः ॥ ९ ॥

**अभित्वापूर्वपीतये** (ग्रा. ७. ३. २५६. १) इत्यत्र ऊपास्थाने वषडिति हीषीस्वरं कार्यम्। तथा चेदं साम वषट्कारनिधनमित्युच्यते ॥ ९ ॥

कयानायां वा ॥ १० ॥

**कयानश्चित्र आभुवत्** (ग्रा. ५. ६. १६९. १-३) इत्येषां द्वितीये साम्नि ऊपास्थाने वाशब्दः कार्यः। देवताध्याये तु **आपवस्वसहस्रिणम्** (ग्रा. १४. ४. ५०१. १) इत्यस्यापि वाङ्निधनत्वं श्रूयते। **कयानश्चित्र आभुवत्-आपवस्वसहस्रिणम् इति वाङ्निधने सारस्वते** (दे. ब्रा. १. १४) इति ॥ १० ॥

गव्योषुणस्सखाय आशिषा ॥ ११ ॥

**गव्योषु** (ग्रा. ५. ८. १८६. १-२) इत्यनयोराद्ये **सखाय आशिषामहे** (ग्रा. १०. ४. ३९०. १-३) इत्येषामाद्यन्तयोरूपास्थाने हीषीति वाङ्निधनं कार्यम्। तथा प्राप्तं वेत्यर्थः ॥ ११ ॥

---

5. O. om. अव्यक्तं ... तथेति (L. 6).
6. B². विकारादेश° for विकारोपदेशाः.
7. B². °विधि° for विधान°.
9. O. ऊपायाः for ऊपा°.
13. B². om. तु.
14. B². वा for वाङ्.
17. O. हीषी for आशिषा.
19. O. after एषां adds ; च ; S¹S². अनयोः for एषाम्.

एन्द्र प्रक्षु यथाप्सु पिप्पलमवपद्येतापो वा ॥ १२ ॥

एन्द्रपृक्षु कासु चित् (ग्रा. ६. १२. २३१. १) इत्यत्रोपायाः स्थाने तथा निधनं कार्यं यथा यादृशेन ध्वनिना अप्सु पिप्पलमवपद्येतावपतेत् । यथा वा अप्स्वापो वावपद्येरंस्तथेति ॥ १२ ॥

प्रमित्रायं हिष्कृत्य दिवं गच्छा ॥ १३ ॥ 5

प्रमित्राय प्रार्यम्णे (ग्रा.७.३.२५५.१-३) इत्येषामाद्ये साम्न्यूपास्थाने हिष्कृत्य दिवं गच्छेत्यादि निधनं कार्यम् ॥ १३ ॥

वृष्ट्वा दिवं गच्छ इति वृष्टिकामस्य ॥ १४ ॥

प्रमित्रायेत्येव ॥ १४ ॥

उद्ग्रहकामस्य न कृत्येति ॥ १५ ॥ 10

उद्ग्रहो वृष्टिनिवारणम् । तत्कामस्य प्रमित्रायेत्यस्योपास्थाने न कृत्येति निधनम् ॥ १५ ॥

अभि वस्तमिन्द्रं जोहार्चिके ॥ १६ ॥

अभी वो वीरमन्धसः (ग्रा. ७. ४. २६५. १) इत्यत्र तमिन्द्रं जो हवीमि (ग्रा. १२. १२. ४६०. १) इत्यत्र च ऊपास्थाने आर्चिके निधने कार्ये । यथेति पूर्वत्र । ज्री इत्युत्तरत्र ॥ १६ ॥ 15 16

---

3. O. अवपद्यते for अवपतेत्.

4. O. अथवा for यथा.

6. O. उपा° for ऊपा°.

9. B[2]. om. प्रमित्रायेत्येव.

11. O. om. उद्ग्रहो...तत्कामस्य प्रमित्रायेत्यस्य.

16. O. पूर्वस्य ... उत्तरस्य for पूर्वत्र ... उत्तरत्र.

कस्तमिन्द्रपरे स्वर्ज्योतिषी पृथक् ॥ १७ ॥

**कस्तमिन्द्र त्वावसवा** (ग्रा. ७. ५. २८०. १-२) इत्यनयोः परे साम्नि द्वे ऊपे स्तः । तयोः पूर्वस्याः स्थाने स्वः । उत्तरस्याः ज्योतिरित्येवं **स्वर्ज्योतिषी पृथक्** कार्ये । तथा च **स्वर्ज्योतिर्निधनमुत्तरम्** ॥ (आ. ब्रा.
5 ३. ५. ८) इत्यार्षेयब्राह्मणम् ॥ १७ ॥

कुष्ठः को ह्रस्वाबृहदोपशावत् ॥ १८ ॥

**कुष्ठः को वामश्विना** (ग्रा. ८. ८. ३०५. १) इत्यत्रोपास्थाने ह्रस्वाबृहदोपशावत् निधनं कार्यम् । **दिशंविश२ हस्** । **अश्वाशिशुमती ३ । इट् इडेति** ॥ १८ ॥

10 अभि त्यमिन्द्र इव दस्यूँ रमृणाः सूर्या
इव दस्यूँ रमृणाः वज्रिन् सुवज्रिन् ॥ १९ ॥

**अभि त्यं मेषम्** (ग्रा. १०. ३. ३७६. १) इत्यत्रोपास्थाने त्रीण्येतानि निधनानि कार्याणि ॥ १९ ॥

अपि वैतेषामेकम् ॥ २० ॥

15 अथवा एतेषां त्रयाणामेकमेव निधनं कुर्यात् । न त्रीणि सहेति । अत्र अभित्यमेषमिति प्रकृत्य सामविधिब्राह्मणम्—**इन्द्र इव दस्यू२ रमणा इति**
17 **चास्य निधनं कुर्यात्** ॥ (सा. वि. ब्रा. ३. ६. ९) इति ॥ २० ॥

---

12. O. om. अभित्यं ··· कार्याणि ॥ अपि ··· एकम् ॥

15. S[2]. after त्रयाणां adds : निधनानां ; B[2]. om. अत्र.

16. O. विधान for विधि ; S[1]S[2]. after ब्राह्मणम्, adds : अभित्यं मेषमिति.

द्वे पूर्वोत्तरे वा सर्वाणि वा समस्यन्नन्त्यमेव स्वरयेत् ॥ २१ ॥

अपि वेत्येव । यद्वा त्रयाणामेव तेषां पूर्वे द्वे उत्तरे वा समस्यन् संहिततयोच्चारयन् तयोरन्त्यमेव स्वरयेत् । मन्द्रान्तं कर्षेत् । नेतरदित्यर्थः । समस्ताभ्यां त्वितरस्य यथापूर्वं प्रयोगः इत्युक्तं भवति । अथवा त्रीण्यपि । समस्यन्नन्त्यमेव स्वरयेत् । नेतरे । एतच्च विकल्पत्रयं सूत्रकारेण स्पष्टं दर्शितम् । 5
द्विर्वा व्यवस्येत् । इन्द्र इव दस्यूं रमृणस्सूर्य इव दस्यूं रमृणः । वज्रिन् सुवज्रिन् । इन्द्र इव दस्यूं रमृणाः । सूर्य इव दस्यूं रमृण। वज्रिन् सुवज्रिन् । इति वा । सकृद् वा । अन्ततः इन्द्र इव दस्यूं रमृणस्सूर्य इव दस्यूं रमृणो वज्रिन् सुवज्रिन् (ला. श्रौ. सू. ७. १०. १२) इति पक्षान्तराण्याह ॥ २१ ॥ 10

यथा वायोभस्त्रासनूपुरपादस्य कंस-
किङ्किणीनां पृथक् ॥ २२ ॥

अत्र सूत्रम्—यथा वायोभस्त्रायां निहन्यमानायां ह्रादः स्याद्यथा वायसी समृच्छेयातां यथा वा निष्कः कृन्तत्रेणाभिहतो ध्वनेत् । यथा वा सनूपुरस्य पादस्य निघातः स्यात् गण्णिति वा ॥ इति । 15
तेनैतत् व्याख्यातम् । तदेतम् (वम् ?) अभित्यं मेषम् (ग्रा. १०. ३. ३७१. इत्यस्य निधनविषये अष्टौ विकल्पा उक्तार्थाः ॥ २२ ॥ 17

---

1. O. समस्यान्त्यम् for समस्यन्.
2. S[1]. एतद्वा for एव । यद्वा ; O. समस्य वारयन् for समस्यन् संहिततयोच्चारयन्.
3. OB[2]. कर्षयेत् for कर्षेत् ; S[2]. इतरौ for इतरत्.
4. B[2]. समस्ताम्याद्वितरस्य for समस्ताभ्यां त्वितरस्य.
5. B[2]. समज्यम्, SO. समस्यान्त्यम् for समस्यन्नन्त्यम् ; B[2]S[1]. इतरेण for इतरे ; B[2]. तत् for एतत्.
10. O. पक्षान्तरम् for पक्षान्तराणि.
11. O. भस्त्रसनूपुरपाद for भस्त्रासनूपुरपादस्य.
13. O. ह्लादि B[2]. ह्लादा for ह्लादः.
14. O. वायासाम मृच्छेयातां for वायसी समृच्छेयाताम् ; O. कृतत्रेण, S[1]. कृन्ततृतेन, S[2]. कृतेन्त्रेण for कृन्तत्रेण
15. B[2]. सनूपुर° for सनूपुरस्य.
16. B[2]. तदेतत्, S[1]S[2]. तदेतम्, O. तद्वत् for तदेवम्.

## द्यौतानयोरा ईन्द्रा आ आग्ना इ ॥ २३ ॥

पूर्वस्मिन् द्यौताने आ औ हो इत्यस्य स्थाने आईन्द्रा इति निधनम्। उत्तरस्मिन् स्वा औ हो इत्यस्य द्विरुक्तस्य स्थाने आ आग्नाइ इति द्विरुक्तम् ॥ २३ ॥

5 संशानेषु यथाधीतं ब्राह्मणस्य। संजित्यै विजित्यै सत्याजित्यै जित्या इति क्षत्रियस्य। संपुष्ट्यै विपुष्ट्यै सत्यापुष्ट्यै पुष्ट्या इति वैश्यस्य ॥ २४ ॥

संशानेषु यथाक्रमं ब्राह्मणस्य। संश्रवसे विश्रवसे सत्यश्रवसे श्रवसे इति निधनानि। स्पष्टं शेषम् ॥ २४ ॥

## औपगवयोरथामथा वा ॥ २५ ॥

10 औपगवयोरुपास्थाने अथेति निधनं कार्यम्। मथेति वा ॥ २५ ॥

## कामं तु नाना ॥ २६ ॥

तयोः प्रथमे अथा द्वितीये मथेत्येवं द्विनिधने पृथगेव क्रमेण कार्ये। कामं यदि तथेष्टम् इत्यर्थः ॥ २६ ॥

## अभिचरणीयेषु वा मथाथान्यत्र ॥ २७ ॥

15 अथवा अभिचरणीयेषु क्रतुषु द्वयोरपि मथेति निधनं कार्यम्। तस्य
17 हिंसार्थत्वात्। अन्यत्र त्वथेति। तस्य मङ्गलार्थत्वात् ॥ २७ ॥

---

11. B[2]. अथेति for मथेति.
13. B[2]. कथा for अथा.
14. B[2]S[1]S[2]. यथेष्टम् for तथेष्टम्.
16. S[1]S[2]. उभयोः for द्वयोः.

अग्निं होतेति यथा महादिवाकीर्त्यस्यात्मनोऽन्ततो निधनम् ॥ २८ ॥

अग्निं होतारम् (ग्रा. १२. २२. ४६५. १-४) इत्येषामाद्ये साम्नि ऊपास्थाने तथाविधं निधनं कार्यं यथाविधं महादिवाकीर्त्यसम्बन्धिनः सप्तमानुगानस्य अन्ततो निधनम् । ए । अभ्राजीज्ज्योतिरभ्राजीदिति । अन्तत इति वचनमन्तर्निधनव्यावृत्त्यर्थम् ॥ २८ ॥ 5

पाहि प्रेतिः ॥ २९ ॥

पाहिनो अग्न एकया (ग्रा. १. ४. ३६. १-३) इत्येषामन्त्ये सामनि ऊपास्थाने प्रेतिरिति निधनं कार्यम् ॥ २९ ॥

कार्तयशे च त्रयो विकल्पाः दयित्नवे हं दयित्नवे हं दयित्नवे हम् । एवमेव सामान्ते ॥ ३० ॥ 10

कार्तयशो द्वे ऊपे स्तः । तयोः स्थाने हम् इति निधने कार्ये । तत्र पूर्वस्य निधनस्य तत्पूर्वस्यार्चिकस्य पर्वणोऽन्योन्यसंनियोगेन स्वरविकल्पप्रदर्शनं दयित्नवे हम् इत्यादि । एवं सामान्तेऽपि घजिह्वियां हांऽ इत्यादि विकल्पत्रयं द्रष्टव्यमिति ॥ ३० ॥ 15

नाकमच्छा औहोवा पक्षिण्यो दशताः । पक्षिण्यो दशताः शताः इति वा ॥ ३१ ॥ 17

---

1. O. संबन्धिनः for आत्मनोऽन्ततो निधनम्.
4. B². सप्त° for सप्तम°.
5. B². om. अभ्राजीज्ज्योतिर्.
13. O. संयोगेन for संनियोगेन.
14. O. स्वजिह्वया॰हु॰ for घजिह्वियं हा.
15 O. om. इति.
16. B². पन्ये दाशाताः पक्षिन्यो दाशाता शाताः O. पक्षिण्यो दश दशताः । पक्षिण्यो दशदशताः for पक्षिण्यो दशताः । पक्षिण्यो दशता शताः.

अबोध्यग्निः (ग्रा. २. ८. ७३. १ ) इत्यत्र नाकमच्छेस्यार्चिका-न्यक्षराणि । एवं वागन्तानि गीत्वा ततः पक्षिण्य इत्यादिनिधनद्वयं विकल्पेन कार्यम् ॥ ३१ ॥

वाक्बृहद्रथन्तरयोः । वाक्बृहद्रथन्तरयोः ॥ ३२ ॥

5 इति श्रीकात्यायनविरचिते प्रतिहारसूत्रे पञ्चदशः खण्डः ॥ १५ ॥

प्रकृतिनिधनस्थाने वाङ्निधनं कार्यम् । एतच्च सूत्रकारेणानुक्तत्वादयज्ञ-संयुक्तविकल्पविषयमिति सिद्धम् ॥ ३२ ॥

इत्थं कात्यायनीयस्य प्रतिहारस्य निर्मिता ।
वृत्तिर्वरदराजेन वामनार्यस्य सूनुना ॥ १ ॥

10 उपग्रन्थस्य विवृतिर्माधवार्येण या कृता ।
तस्या वरदराजेन शेषः संप्रति पूरितः ॥ २ ॥

अत्रेदन्तावगमः साम्नामृषयश्च भक्तयश्चोक्ताः ।
13 कल्पब्राह्मणसूत्रैराहत्य क्रतुषु विहितानाम् ॥ ३ ॥

---

1. B². आश्रित्यानि, O. आर्चिक° for आर्चिकानि.
6. O. प्रकृत° for प्रकृति° ; O. यज्ञ° for अयज्ञ°.
7. O. after संयुक्त upto प्रतिहारस्य lacuna.
9. O. वित्तिः for वृत्तिः ; O. वामनाचार्य for वामनार्यस्य.
10. O. वृत्तिस्तु for विवृतिः ; O. माधवाचार्येण for माधवार्येण.
11. O. Lacuna from तस्या upto संप्रति.
12. O. ऋषयः स्व° for ऋषयश्च.

अपि चैकार्षेयाणामिह विनियोगव्यवस्थोक्ता ।
छन्दोदैवतयोश्च न्याय्योऽस्माभिः प्रदर्शितः पूर्वम् ॥ ४ ॥

कात्स्न्र्येन च्छन्दोदैवतविनियोगानां तु दर्शयिष्यामः ।
आर्षेयकल्पविवृतौ क्रतुप्रयोगक्रमानुसारेण ॥ ५ ॥

इति श्रीवामनार्यसुत-वरदराज-विरचितायां दशतयीवृत्तौ 5
प्रतिहारसूत्रव्याख्यायां पञ्चदशः खण्डः ॥ १५ ॥

प्रतिहारसूत्रभाष्यं समाप्तम् 7

ॐ

1. O. Lacuna from °ह विनियोगव्यवस्थोक्ता । छन्दो.

3. B[2]. सकात्स्न्र्यं O. कात्स्न्र्यं for कात्स्न्र्येन.

7. B[2]. before प्रतिहार° adds : हरिः ओम् । and after समाप्तम् ॥ adds : श्री पद्मनाभो रक्षतु । शुभमस्तु ॥ दशार्थनामायं ग्रन्थः समाप्तः ॥ ; O. after समाप्तम् ॥ adds : शुभमस्तु ॥ ; S[1]S[2]. इति प्रतिहारभाष्ये पञ्चदशमः खण्डः ॥

# APPENDIX (A)

The MS. No. R. 649 of the Madras MSS Library after ...उच्यन्ते (p. 212 L. 11) adds a discussion on सुब्रह्मण्या. The heading given to this is सुब्रह्मण्याविषयः। It is not clear where it was taken from.

## सुब्रह्मण्याविषयः

अमुष्य पुत्रः पौत्रो नप्तेति पूर्वेषामथापरेषां यथाज्येष्ठं स्त्रीपुंसानामिति वचनात् यस्य पितृद्वयं—'जनक एकः प्रतिग्रहीता एकः'—तदा द्वयोरपि नामग्रहणम्। कृष्णराम-शर्मणोः पुत्रो यजत इति। मातृद्वयेऽपि श्रीदेवी-लक्ष्मीदेव्योः पुत्रो यजत इति। मातृबाहुल्ये तु लक्ष्मी-सीता-रुक्मिणीदानां पुत्रो यजत इत्यादिग्रहणम्। एवं पितामहद्वयेऽपि प्रपितामहद्वयेऽपि नप्तृद्वयेऽपि पितामहीप्रपितामहीनामनेकत्वेऽपि न[ाम]ग्रहणम्॥

द्विपिता [वा] द्विमाता वा नामग्राहो द्वयोर्द्वयोः।
एवं पितामहादेश्च स्त्रीपुंसोर्ज्यैष्ठ्यतस्तथा॥
पौत्रात्पूर्वं [तु] जातस्य पुत्रवर्ज्यं समाप्य च।
पौत्रस्य ग्रहणं पश्चात् प्रपौत्रस्यैवमेव च॥
प्रत्तायां नाम गृह्णीयात् पतितस्य न चेष्यते।
न संन्यासिन एवं स्यान्नाशक्यादेस्तथैव च॥
अमुष्य पुत्रः स्त्रीपुंसोः साधारण्येन चोच्यते।
उत्पत्त्या प्रथमस्येव यमयोर्ज्यैष्ठ्यमुच्यते॥
जन्मज्येष्ठ्ये न चाह्वानं सुब्रह्मण्यास्वविस्मृतम्।

दत्तपुत्रविषये जननीप्रतिग्रहीत्र्योरुभयोरपि ग्रहणम्। मात्रादीनां सुब्रह्मण्याह्वाने नामग्रहणं नास्ति। अमुष्येत्यत्र पुंल्लिङ्गस्यापि विवक्षायां प्रमाणाभावात्। किं च अपरेषां पुत्रादीनां नामग्रहणे यथाज्यैष्ठ्यं स्त्रीपुंस्यानामित्यत्र स्त्रीग्रहणाच्च। यदि च पूर्वेषामपि स्त्रीग्रहणं स्यात् तदा तत्रापि सूत्रकारः स्त्रीग्रहणं कुर्यात्। किं च निदानकारेण च सुब्रह्मण्यायां नामग्रहणं किमर्थमित्याक्षिप्य प्रयोजनमुक्तम्—उच्चावच्चरणाः स्त्रियो भवन्ति। त इह देवसाक्ष्ये मनुष्यसाक्ष्ये च येषां पुत्रो तेषामेव पुत्रो भविष्यामि। यांश्च पुत्रान् वक्ष्ये ते मे पुत्रा भविष्यन्तीति। ततश्च पित्रादिष्वेव संदेहः। न मात्रादिष्विति। तासां ग्रहणं [न] कर्तव्यमिति केचिद् वदन्ति यद्यपि तथापि शिष्टाचाराद् धन्विकारेण तालवृन्द-निवासिना च मात्रादिनामग्रहणस्य कर्तव्यत्वप्रतिपादनात् मात्रादीनामपि नामग्रहणं कर्तव्यमिति दिक्॥

ॐ

# APPENDIX (B)

## GLOSSARY

Explanation of technical terms and words of special significance as given in the commentary is given hereunder. When no explanation is available in the commentary the same is given by the editor in brackets.

| Word | Explanation | Page |
|---|---|---|
| अक्रान्तैः | अविलम्बितैः | 179 |
| अग्निदूतास्वर | (The parvan of a gāna having the tones of अग्निदूता (ग्रा. गे. १. १. ३) | 183 |
| अतिच्छन्दसम् | (Name of two large classes of metres) | 113 |
| अध्यासः | (The 13th pada of Mahānāmnī Sāman in each of its three tṛcas (stotriyas) | 206 |
| अनवक्रुष्टः | (a swara not drawn) | 175 |
| अन्तःसामिकं (निधनम्) | (The nidhanas of a gāna such as इह, इडा, अथ etc. or the last syllable or word of a verse itself, which are inserted in the middle of a sāman chant) | 211 |
| अन्तर्निधनं (साम) | ऋगन्तर्भूतमार्चिकमेवाक्षरं निधनं यस्य (तत् साम) | 13 |
| अभिचरणीयेषु | (हिंसार्थकेषु) क्रतुषु | 222 |
| अशाक्वरम् | (The padas of Mahānāmnī chant other than शाक्वर) | 208 |
| अवक्रुष्टः | (a drawn स्वर or vowel) | 175 |
| आदानम् | उद्गीथारम्भः | 178 |
| आन्धान्ताः | आइही (ग्रा. गे. ८. ९. ३१३. २) निहवे असाविदंगो- ऋजीक ३ मान्धा ३: इत्यत्र अन्धःशब्दस्य मध्यमाभ्यास- रूपा पर्वभक्तिरान्धेत्युच्यते। स्वरेण तत्सदृशरूपा आन्धान्ताः | 168 |
| इदन्ता | विशिष्टस्वरूपम् | 27 |

| Word | Explanation | Page |
|---|---|---|
| उदूह | (तृतीयप्रभृतीनां प्रतिलोमवर्तमानानां तृतीयद्वितीयप्रथम-स्वराणां मध्ये यः कश्चिदुदात्ततमः स्वरः आचार्यास्तमुदूहं मन्यन्ते । i.e., for the fourth tone the first tone is उदूह, for the fifth the second and for the sixth the third) | 122 |
| उद्ग्रहः | वृष्टिनिवारणम् | 219 |
| उद्देशः | उद्दिश्यतेऽनेनेति उद्देशो लक्षणम् | 2 |
| उद्भिद् | (Name of a sacrifice) | 182 |
| उपायः | उपायशब्देन "वाक् चेत् स्तोभान्तोऽनन्तरः पुरस्तात् वृद्ध" इत्यादिसूत्रोक्तनिधनादिलक्षणभूतो वागादिः | 17 |
| उपायः | उपद्रवः | 87 |
| ऊधः | (The 8th pada of Mahānāmnī Sāman in each of its three tṛcas (stotriyas) | 206 |
| एकिन् | प्रथमः | 30 |
| एकिनेस्वरा | प्रथमस्य मार्गीयवस्य यन्निधनम् एकिने इति तत्सदृशस्वरा | 217 |
| ऐडं (साम) | (The Saman chant of which इडा or डा forms the nidhana, e.g. काशीत and बृहद्भारद्वाज respectively) | 211 |
| चतुष्पर्यायः | चत्वारः पर्यायो यस्य स तथोक्तः । चतुरावर्तनीय इत्यर्थः | 202 |
| छन्ननिधनानि | स्वाध्यायकाले रूपान्तरेणाध्ययनच्छन्नानि प्रयोगकाले स्वरूपेण प्रयोज्यानि निधनानि | 216 |
| जामि | तुल्यान्तयोः साम्नोः संनिपातः | 24 |
| जारा | प्रथमजराबोधीयप्रथमपर्वसदृशस्वरा पर्वजातिः | 32 |
| दशत् | दशच्छब्देन दशवर्गाभिधायिना खण्डापरपर्यायोऽनुवाकोऽत्राभिधीयते । छान्दसाध्याये प्रायेण दशर्चपरिमितत्वात् | 28 |
| देवताः | यानि लोकप्रसिद्धानि अनार्चिकानि पदानि सुवरित्यादीनि । वाक्यानि वयोबृहत्सत्यमोज इत्यादीनि । तानि साक्षात् परंपरया वा देवताप्रतिपादनपरत्वात् देवता इत्युच्यन्ते | 212 |

| Word | Explanation | Page |
|---|---|---|
| दोषा | दोषावस्तोरित्येतत्स्वरसदृशस्वरा पर्वजातिः | 158 |
| धातुः | (The 6th pada of Mahānāmnī in each of its tṛcas (stotriyas) | 206 |
| नवमतन्त्रे | दशरात्रस्य नवमेऽहनि | 89 |
| निधनम् | (The last of the five Bhaktis of a sāma-gāna. The nidhana is of two kinds: (a) सामान्तिक i.e. the concluding division of a sāmagāna, which may be in the form of स्वर, निधन, इडा or वाक् ; (b) अन्तः-सामिक i.e. a word or phrase similar or identical to the concluding division inserted in the middle of a gāna after each bhakti) | 211 |
| निधनम् | The second of the four nidhanas. It is of two kinds पदनिधन and बहिर्निधन. | 211 |
| निधनस्वरम् (गीतम्) | सामान्त्येन निधनेन सदृशस्वरं यत् तत् साममध्येऽपि गीयते | 212 |
| न्याय्यम् | औत्सर्गिकम् | 4 |
| पदनिधनम् (साम) | The sāman of which the concluding pada forms the nidhana e.g. यौधाजय | 211 |
| पदविभाग्यानि (सामानि) | स्तोभरहितानि प्रवद्भार्गवादीनि पदविभाग्यानि । तेषु पदानामेव केवलानां विभागात् । | 16 |
| पदानुस्वारं (साम) | (The sāman of which the nidhana consists of the anuswāra of the last pada, e.g. औशन) | 211 |
| परिगाणेषु | परिमात्सु | 113 |
| परिमात् | a group of 16 sāmans belonging to the Mahāvrata stotra | 113 |
| परिसाम | (a sāman which is occasionally inserted) | 191 |

| Word | Explanation | Page |
|---|---|---|
| पर्याय: | (A regularly recurring series or formula) | 202 |
| पुरुष: | (The 9th पद of माहानाम्नी chant in each of its three tṛcas (स्तोत्रीयs) | 206 |
| प्रवर्ग्य | (a ceremony introductory to soma sacrifice) | 186 |
| बलभिद् | (Name of a sacrifice) | 182 |
| बहिर्निधनम् (साम) | साम ऋगक्षराद् बहिर्भूतेन निधनेन युक्तम् (a sāman to which a stobha or a word other than स्वर, इडा and वाक् is added after the verse-text at the end) | 13 |
| महाव्रतम् | (name of a sāman or stotra to be sung in the last day but one of the गवामयन) | 186 |
| मार्जालीयम् | (a side-alter to the right of the Vedi, on which the sacrificial vessels are cleansed) | 192 |
| वज्रम् | (name of a sacrifice) | 180 |
| वत्स: | (The 7th pada of महाम्नी in each of its tṛcas (stotriyas) | 206 |
| वाङ्निधनम् | वागिति वाशब्द उच्यते । तन्निधनानि यज्ञायज्ञीयादीनि । | 211 |
| विच्छन्द: (साम) | स्वयोनिविसदृशच्छन्द: साम ।...तत्र योनौ प्रतिहारत्वेनोक्तानाम् अक्षराणां गीतिर्विच्छन्दसि यावत्स्वक्षरेषु तावन्त्येवाक्षराणि प्रतिहार: । न तु योन्युक्तमक्षरपरिमाणं तस्मिन्नादरणीयमित्यर्थ: । | 15 |
| विधा | (part or portion of a gāna) | 129 |
| विभाग्यानि (साम) | पदेषु सदृश्यो गीतयो येषां प्रवद्भार्गवादीनां तानि | 9 |
| विषमभक्तीनि (सामानि) | (The sāmans whose Bhaktis are unevenly divided) | 9 |
| शाक्वराणि | (3-5, 8 and 10-12 padas of महानाम्नी in each of its three tṛcas (stotriyas) | 206 |

| Word | Explanation | Page |
|---|---|---|
| श्येनः | (Name of a sacrifice) | 187 |
| षोडशिसाम | The sāman contained in the 16 partite stotra | 148 |
| संचारः | पुनः प्रयुक्तिः | 25 |
| संदंशः | (Name of a sacrifice) | 180 |
| समस्यन् | संहिततयोच्चारयन् | 221 |
| समुद्देशं | संक्षिप्तं लक्षणम् | 2 |
| समूढं | पृष्ठचादि | 137 |
| सामान्तिकं निधनम् | (स्वर, निधन, इडा and वाक् which come at the end of a sāmagāna) | 211 |
| सस्तोभपदविभाग्यानि (सामानि) | स्तोभयुक्तानि महावैश्वामित्रादीनि...तेषु सस्तोभानां पदानां विभागात् [तानि सामानि] | 16 |
| स्तोभविभाग्ये (सामनी) | स्तोभा विभाग्याः ययोस्ते | 112 |
| स्वाराणि (सामानि) | हाइकारस्वारपदानुस्वाराणि [सामानि। ] तत्र हाइकार-स्वाराणि वामदेव्यादीनि । पदानुस्वाराणि औशनादीनि । | 211 |
| हीषीस्वरम् | अग्न आयाहि वीतये (ग्रा. गे. १. १. १. १.) इत्यत्र त्रिवर्गस्याद्ये साम्नि अन्त्यं पर्व हीषी । तत्सदृशस्वरम् हीषीस्वरम् | 212 |

ॐ

# APPENDIX (C)

Citations from other works found in the commentary are given below with reference to source. The citations, of which the sources cannot be traced, are either left with a question mark or referred to as stated in the commentary.

| Quotation | Source | Page |
|---|---|---|
| अकूपारो वा | तां. ब्रा. १५. ५. ३० | ९९ |
| अगतिस्तोभस्य | पु. सू. ५. ५. २ | ८१ |
| अग्न आयाह्यग्निभिरित्येष आङ्गिरसः प्रगाथः | आ. क. | १६० |
| अग्न आयूंषि इति प्रतिपदं कुर्यात् | तां. ब्रा. ६. १०. १ | १६४ |
| अग्निदूताभ्यस्तामध्यमक्रौञ्चस्य | पु. सू. १०. ११. ३ | १४४ |
| अग्नीषोमौ तत्रोभयोर्व्रते | द्रा. श्रौ. सू. २. २. ४२ | १९१ |
| अग्नेर्जराबोधीये द्वे | आ. ब्रा. १. ३. ५ | ३७ |
| अग्नेर्यद्वाहिष्ठीये द्वे | आ. ब्रा. १. १०. ६ | ५२ |
| अग्नेर्विशोविशीयम् | आ. ब्रा. १. १०. ७ | ५२ |
| अग्नेर्वैश्वानरस्य- | आ. ब्रा. १. ९. ८ | ५१ |
| अग्नेर्वैश्वानरस्य त्रीणि | आ. ब्रा. ६. १. ४-१ | १६६ |
| अग्नेर्हरसी द्वे | आ. ब्रा. १. ५. ११ | ३१ |
| अग्नेरर्कादुत्तराणि- | आ. क. ६. ८. २ | ११७ |
| अग्नेरर्कादुत्तरे- | आ. क. ६. ९. ४ | ११७ |
| अग्नेरायुः | आ. ब्रा. १. ५. १० | ३१ |
| अग्नेरिलान्दं पश्चानुगानम् | आ. ब्रा. ६. ५. १ | १९५ |
| अङ्गिरसां चोत्सेधनिषेधौ | आ. ब्रा. ५. ५. ४ | १३३ |
| अङ्गिरसो वै सत्रमासत | तां. ब्रा. १२. ११. १० | १२३ |
| अच्छिद्ररयिष्ठे द्वे- | आ. ब्रा. ५. ५. २ | १३० |
| अञ्जतो व्यञ्जतः समञ्जतः इति काक्षीवतानि | आ. ब्रा. ५. ९. ११ | १५५ |

| Quotation | Source | Page |
| --- | --- | --- |
| अभ्यासवत्तस्य द्व्यक्षरान्- | नि. सू. ३. १३. ७. | २०६ |
| अयं त इन्द···दैवोदासम् | तां. ब्रा. ९. २. ८ | ७१ |
| अयं पूषा···इति आसितम्— | आ. क. ४. ४. ५. | ५६ |
| अयं पूषा···इति आसितं च- | आ. क. ७. २. ५ | १४२ |
| अयं पूषा···इति आसितं क्रौञ्चं- | आ. क. ४. ४. ५. | १४५ |
| अयं पूषा···इति गौरीविमेकस्याम् | आ. क. ११. ९. ५ | १५५ |
| अयं पूषा···इति गौरीवितं चैडं च- | आ. क. १०. ६. ५ | १४२ |
| अयं पूषा···इति गौरीवितं च क्रौञ्चं- | आ. क. १. ३. ५ | १४४ |
| अयं पूषा···इति गौरीवितं च भर्गश्च | आ. क. ? | १४३ |
| अया पवा···इति इहवद्वासिष्ठम्- | आ. क. १. ९. ३ | १३७ |
| अर्धपदं निधनमिडाव्यपेतेषु | ला. श्रौ. सू. ७. ७. ५ | १७२ |
| अर्षासोम···इति गायत्रमेकस्याम् | आ. क. ३. ७. ३ | ७२, १६० |
| अर्षासोम···इति गायत्रं च- | आ. क. १. ६. ३ | ७२ |
| अविधाद्यः | पु. सू. १०. १०. ५ | ३८, ४५ |
| अविभाग्यश्चेदष्टमेन— | द्रा. श्रौ. सू. ? | १६९ |
| अशाक्वरी प्रथमा- | नि. सू. ३. १३. २ | २०६ |
| अश्वत्रिरात्रे नाना- | ला. श्रौ. सू. २. १२. ६ | ५१, ६० |
| अश्वो व भूत्वा- | तां. ब्रा. ११. १. ५ | ६२ |
| अष्टावौरुक्षय- | पु. सू. १०. ११. १० | १०२ |
| अष्टेडरयिष्ठयोर्हित्वनादीदिहिस्वर- | पु. सू. ९. १. ५ | १३०, १७२ |
| अष्टौ वै रूपाणि- | आ. ब्रा. ६. १. १. १ | १६० |
| असावि···इत्यैडं याममन्त्यम् | आ. क. ८. १०. ४ | १५४ |
| असाव्यंशुर्···इति गायत्रं— | कल्पः ? | ११९ |
| असृक्षतेति बहिष्पवमानम् | ला. श्रौ. सू. ४. ८. १२ | १३२ |
| अस्तीति गौतमः | नि. सू. १. १३. १८ | २१ |

| Quotation | Source | Page |
| --- | --- | --- |
| अहीनिक्यां रात्रौ- | आ. क. ६. १. १ | ९६ |
| आकूपारं भवति | तां. ब्रा. १५. ५. २९. | ९९ |
| आकूपाराङ्गिरसस्यासीत्— | तां. ब्रा. ९. २. १४ | ७५ |
| आज्यदोहानि- | आ. ब्रा. ६. १. ४. २ | १६५ |
| आ तू न…इत्याकूपारम् | तां. ब्रा. ९. २. १३ | ७५ |
| आदित्यानामेकविंशति- | आ. ब्रा. ६. ४. २. १ | २०४ |
| आद्यन्तस्तुब्धेषु- | ला. श्रौ. सू. ७. ५. २२ | १६, १७ |
| आनूपं भवति | तां. ब्रा. १३. ३. १६ | ९० |
| आन्धीगवादुत्तरं- | आ. क. ५. ७. ४ | १०२ |
| आभीकं भवति | तां. बा. १५. ९. ८. | ११५ |
| आभीशवं भवति | तां. ब्रा. १५. ३. २७ | १३१ |
| आभीशवं भवत्यह्नो धृत्यै | तां. ब्रा. १२. ९. १५ | १३१ |
| आयास्यं चायासोमीयम्- | आ. ब्रा. ५. ४. ११ | १२५ |
| आयास्ये भवतः | तां. ब्रा. ११. ८. ९ | १२७ |
| आयास्यो वाङ्गिरसः | तां. ब्रा. ११. ८. १० | १२७ |
| आयुर्नवस्तोभाभ्यां— | तां. ब्रा. ५. ४. १२ | १८५ |
| आवृत्तेऽभिप्लवे कतमत् संतनि कुर्यात् | नि. सू. ? | १५९ |
| आश्वं भवति | तां. ब्रा. ११. १. ४ | ६२ |
| आष्टादंष्ट्रं भवति | तां. ब्रा. १२. ९. १४ | ९७ |
| आसितं भवति | तां. ब्रा. १४. ११. १८ | ५८ |
| आसितं भवति। यदेव— | तां. ब्रा. १५. ५. २६ | ५६ |
| आसिती वा एतेन | ताँ. ब्रा. १४. ११. १९ | ५८ |
| आसोफतृतीयायाम्- | पु. सू. ९. १. १७ | १५७ |
| इकारादिमिडां सर्वे उपेयुः।- | ला. श्रौ. सू. ७. ८. १३ | २११ |
| इडेति धानंजय्यः | ला. श्रौ. सू. ७. ८. १८ | २११ |

| Quotation | Source | Page |
|---|---|---|
| इतराण्यनुगानानि उद्गातैव- | ला. श्रौ. सू. ७. ६. १४ | २०१ |
| इन्द्र इव...इति चास्य निधनं कुर्यात् | सा. वि. ब्रा. ३. ६. ९ | २२० |
| इन्द्रक्रतुवासिष्ठं नवमतन्त्रे— | ? | १३७ |
| इन्द्र क्रतुं न आभार इति पौरुमीढम्— | आ. क. २. ७. १ | ४९ |
| इन्द्रप्रभृति— | ला. श्रौ. सू. ३. ९. २२ | १९८ |
| इन्द्रसुतेषु सोमेति कौत्सम् | तां. ब्रा. ९. २. २० | १०४ |
| इन्द्रस्य त्रयोऽतीषङ्गाः | आ. ब्रा. ६. ४. ४ | १६८ |
| इन्द्रस्य नानदं तृतीयम् | आ. ब्रा. ४. १. १ | १०० |
| इन्द्रस्य प्रमंहिष्ठीयानि- | आ. ब्रा. १. १३. १ | ५८ |
| इन्द्रस्य यौधाजयम्— | आ. ब्रा. ५. ५. १ | १२९ |
| इन्द्रस्य राजनरौहिणे द्वे | आ. ब्रा. ६. ४. ८ | १९३ |
| इन्द्रस्य रोहित- | आ. ब्रा. २. २. ५ | ६५ |
| इन्द्रस्य शुद्धाशुद्धीये | आ. ब्रा. ३. १२. ९ | १०० |
| इन्द्रस्य संजये द्वे- | आ. ब्रा. ४. ८. १ | १०९ |
| इन्द्रस्य संवर्ते द्वे- | आ. ब्रा. ४. ५. ३ | १०७ |
| इलान्दस्योत्तमेऽनुगाने षड् | ला. श्रौ. सू. ७. ७. १२ | १९७ |
| इन्द्रो यतीन् सालावृकेभ्यः | तां. ब्रा. १४. ११. २९ | १०० |
| इलान्दाद्ये त्रिरुक्तम् | पु. सू. १०. ११. १७ | १९६ |
| इष्टाहोत्रीयमभिषेचनीये | ला. श्रौ. सू. १. १२. ४ | ६६ |
| इहकार इडाथकारौ | ला. श्रौ सू. ७. ८. ५ | ४३, २११ |
| उक्थोत्तमे- | ला. श्रौ. सू. ६. ९. २ | २० |
| उच्चाते...इति गायत्रम् | आ. क. ४. ८. ३ | ४१ |
| उच्चाते...इति गायत्रम् | आ. क. ३. ५. ३ | ७१ |
| उत्तम इति गौतमधानंजय्यौ | ला. श्रौ. सू. ७. १०. ९ | १३५ |
| उत्तमे पादे...प्रतिहरेदिति शाण्डिल्यः | ला. श्रौ. सू. ७. ७. ३१ | ७ |

| Quotation | Source | Page |
| --- | --- | --- |
| एतेन वै यामो- | तां. ब्रा. ११. १०. २२ | १५३ |
| एतेन वै वध्र्यश्वः | ताँ. ब्रा. १३. ३. १७ | ९० |
| एतेन वै विश्वामित्रः- | तां. ब्रा. १४. ३. १२ | ६५ |
| एतेनैवोत्तरयोः शाक्वराणि- | नि. सू. ३. १३. ११ | २०६ |
| एभ्यो वै लोकेभ्यो- | तां. ब्रा. ११. ५. १० | ३२ |
| एवमेवोत्तरस्मिन् | ला. श्रौ. सू. ७. १०. १४ | १४० |
| ऐडेऽर्धं साकमश्वम्- | सूत्रवचनात् | ७६ |
| ऐध्मवाहं भवति | तां. ब्रा. १५. ६. २ | ६६ |
| ऐन्द्रं महादिवाकीर्त्यं- | आ. ब्रा. ६. ४. १. ६ | २०१ |
| ऐन्द्रयो महानाम्न्यः- | आ. ब्रा. ६. ४. २. १५ | २०५ |
| औक्ष्णोरन्ध्रे भवतः | तां. ब्रा. १३. ९. १८ | १३४ |
| औदलमासितं च त्वाष्ट्रीसाम- | आ. क. ७. १२. १ | १४२ |
| और्णायवं भवति | तां. ब्रा. १२. ११. ९ | १२३ |
| औशनमन्त्यम् | कल्पः ? | १८ |
| औशनमौपगवं वसिष्ठस्य- | आ. क. २. २. ७ | १८, ६८ |
| औशनमौपगवमाष्टादंष्ट्रम्- | आ. क. ६. ७. १ | ९७ |
| ...ककुबुत्तरासु- | नि. सू. ७. ४. ४८ | ३९ |
| कण्वबृहति उदा आ- | पु. सू. ९. १. २० | ८३ |
| कण्वरथन्तरस्य सोमसाम- | आ. क. ८. १०. २. | १२६ |
| कयानश्चित्र...इति वाङ्निधने— | दे. अ. ब्रा. १. १४ | २१८ |
| कार्तयशसं स्वरं पयोनिधनम्- | ला. श्रौ. सू. ? | १८४ |
| कार्तयशे च त्रयो विकल्पाः- | ला. श्रौ. सू. ७. १०. १३ | १४० |
| कालेयस्यर्क्षु- | ला. श्रौ. सू. ९. ५. १६ | ४० |
| कावश्रौत- | पु. सू. १०. १०. १२ | ३७, ४८, १५०, १६१, २०२ |

| Quotation | Source | Page |
|---|---|---|
| ग्रामेगेयं चाधीमहे | सं. उ. ब्रा. ३. ५ | ३४ |
| घृताचेराङ्गिरसस्य- | आ. ब्रा. १. ९. ६ | ५१ |
| चतुरक्षरो वा सुरूपाणि- | पु. सू. १०. १०. ९ | ११५ |
| चतुर्निधनमाङ्गिरसं— | तां. ब्रा. १२. ९. १८ | १३५ |
| चतुर्निधनमाथर्वणं | तां. ब्रा. १२. ९. ८ | १६४ |
| चतुर्थस्य प्रथमः पादः— | ला. श्रौ. सू. ७. ७. ७ | १७२ |
| चतुर्थस्याह्नः श्यावाश्व- | क्षु. क. ३. १०. २ | ५० |
| चतुर्थस्याह्नः यामं- | क्षु. क. ३. ११. ४ | ४४ |
| चतुर्थस्याह्नो वसिस्ठस्य- | क्षु. क. ३. ६. १ | ५१ |
| चतुर्थस्याह्नो वारवंन्तीयम्- | कल्पः ? | ४० |
| चतुर्थोदात्ततमान्- | सं. उ. ब्रा. ३. २ | ३४ |
| छन्दांसि वान्योन्यस्य- | ऐ. ब्रा. ४. २७ | २१ |
| छन्दोदैवतसामान्तं- | ला. श्रौ. सू. ६. ९. १ | १९ |
| जाराग्निदूतो- | पु. सू. १०. १०. २० | ३३ |
| जारान्तो वीङ्क— | पु. सू. १०. १०. १७ | ९८, ९९ |
| डाकारं त्वन्यासु- | ला. श्रौ. सू. ७. ८. १५ | २११ |
| तत्र देवताभ्यो— | ला. श्रौ. सू. ७. ६. २४ | १९३ |
| तत् त्रिणिधनानुग्रहाय- | नि. सू. १०. १२. २३ | १७४ |
| तत्रैतत् काशीतम्- | नि. सू. ७. १२. ७ | ४५ |
| तत्रोत्तमस्य स्तोभस्य- | ला. श्रौ. सू. ७. ७. १५ | १९७ |
| तथा च यज्ञे क्रियते- | सं. उ. ब्रा. ३. ४ | ३४ |
| तथा तृतीयः- | ला. श्रौ. सू. ७. ७. ८ | १७२ |
| तथानुपदं- | ला. श्रौ. सू. ७. ५. २३ | १६ |
| तथा शार्ङ्गे- | सूत्रम् | १५५ |
| तदुधारां- | तां. ब्रा. १४. ९. १८ | ३६ |

| Quotation | Source | Page |
| --- | --- | --- |
| तदुसीदन्तीयम्- | तां. ब्रा. ११. १०. १३ | १५७ |
| तदेतानि त्रीणि- | कल्पः | १२२ |
| तद्यथा स्वरेण- | सं. उ. ब्रा. २. २० | १७८ |
| तद्वैकत्रिवृत्- | ला. श्रौ. सू. ४. ८. ११ | १३२ |
| तन्मित्रावरुणयोश्च- | आ. ब्रा. ६. ४. २. ११ | २०४ |
| तन्वस्य पार्थस्य- | आ. ब्रा. २. १. ६ | ६३ |
| तयोर्द्व्यक्षरः- | ला. श्रौ. सू. ७. ९. २ | ४५ |
| तवाहं...इत्याष्टाद्रंष्ट्रम्- | आ. क. १०. ८. ३ | ४६, १५५ |
| तस्य देवतासु- | द्रा. श्रौ. सू. २. २. ३० | १८४ |
| तस्य प्रस्तावयति- | नि. सू. ३. १३. १० | २०६ |
| तस्य महानाम्न्यः- | ? | २०५ |
| तस्य स्थाने पूर्वम्- | ला. श्रौ. सू. ९. ५. १७ | ४० |
| तस्यात्मा- | ला. श्रौ. सू. ७. ६. १२ | २०१ |
| तस्यात्रिर्भासेन- | तां. ब्रा. १४. ११. १४ | १२० |
| तस्यानुपदं- | ला. श्रौ. सू. ७. ६. २१ | १९३ |
| तस्य पृष्ठस्य- | द्रा. श्रौ. सू. ६. १. १९ | १७९ |
| तासां नाना स्तोभेयुः- | ला. श्रौ. सू. ७. ६. ७ | १६७ |
| तासु श्यावाश्व्यम्- | तां. ब्रा. ८. ५. ८ | ५० |
| तासु सर्वासु- | ला. श्रौ. सू. ६. १. १२ | १५९ |
| तिधातुवारा | पु. सू. ९. १. १४ | ४८ |
| तृतीयप्रभृतीनां- | स. उ. ब्रा. ३. ३ | ३४ |
| तृतीयं बृहतीषु- | ला. श्रौ. सू. ७. ९. १२ | १८६ |
| तृतीयेन पादेन- | ला. श्रौ. सू. ७. ६. २२ | १९३ |
| ते देवास्तपोऽ- | तां. ब्रा. १२. ५. २३ | ३२ |
| तेभ्यो नाना स्तोभेयुः | ला. श्रौ. सू. ७. ७. २ | १६८, १७२ |

